## ॥ श्रीगणेशायनमः ॥



यस्य निःश्वसितं वेदा योवेदेभ्योखिलंजगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ सप्तमाष्टकस्य प्रथमोध्यायआरभ्यते । प्रणइति षळृचं विंशं सूक्तं आंगिरसस्यायास्यस्यार्षं गायत्रं पवमानसोमदेवताकं तथाचानुक्रान्तं—प्रणोयास्यइति । गतोविनियोगः ।

तत्र प्रथमा—

**ॐम् प्रणंइन्दोमहेतनंऊर्मिंनबिभ्रंदर्षसि । अभिदेवाँअयास्यः ॥ १ ॥**

प्र । नः । इन्दो इति । महे । तने । ऊर्मिम् । न । बिभ्रंत् ।
अर्षसि । अभि । देवान् । अयास्यः ॥ १ ॥

हे इन्दो सोम त्वं नोस्माकं महे महते तने धनाय प्रार्षसि प्रगच्छसि । न संप्रति अयास्यः स्वयं ऋषिस्तवोर्मिं तरंगं बिभ्रत् धारयन् देवानभिगच्छति यष्टुं ॥ १॥

अथ द्वितीया—

**मतीजुष्टोधियाहितःसोमोहिन्वेपरावति । विप्रस्यधारयाकविः ॥ २ ॥**

मती । जुष्टः । धिया । हितः । सोमः । हिन्वे ।
पराऽवति । विप्रस्य । धारया । कविः ॥ २ ॥

कविः क्रान्तकर्मा सोमो विप्रस्य मेधाविनः स्तोतुः मती मत्या स्तुत्या जुष्टः सेवितः धिया कर्मणा हितोयज्ञे निहितः परावति पवित्राद्दूरदेशे धारया हिन्वे प्रेर्यते ॥ २ ॥

अथ तृतीया—

**अयंदेवेषुजागृविःसुतएतिपवित्रआ । सोमोयातिविचर्षणिः ॥ ३ ॥**

अयम् । देवेषु । जागृविः । सुतः । एति । पवित्रे ।
आ । सोमः । याति । विऽचर्षणिः ॥ ३ ॥

जागृविर्जागरणशीलोयं सोमोदेवेषु देवार्थं सुतोभिषुत आएति समन्ताद्गच्छति। अपिच विचर्षणिः विद्रष्टा सोमः पवित्रे याति पावनार्थं गच्छति ॥ ३ ॥

अथ चतुर्थी—

सनःपवस्ववाजयुश्चक्राणश्चारुमध्वरम्। बर्हिष्माँआविवासति॥४॥

सः। नः। पवस्व। वाजऽयुः। चक्राणः। चारुम्।
अध्वरम्। बर्हिष्मान्। आ। विवासति ॥ ४ ॥

हे सोम यं त्वां बर्हिष्मानृत्विगाविवासति परिचरति सत्वं नोस्मदर्थं वाजयुरन्नमिच्छन्नध्वरं हिंसारहितं यागं च चारुं कल्याणं चक्राणः कुर्वन् पवस्व क्षर ॥४॥

अथ पञ्चमी—

सनोभगायवायवेविप्रवीरःसदावृधः। सोमोदेवेष्वायमत् ॥ ५ ॥

सः। नः। भगाय। वायवे। विप्रऽवीरः।
सदाऽवृधः। सोमः। देवेषु। आ। यमत् ॥ ५ ॥

सपवमानः सोमो वायवे वायुदेवार्थं भगाय भगदेवार्थं च विप्रवीरोविप्रैर्मेधाविभिः स्तुत्या प्रेरितः सदावृधोनित्यवृद्धोभवन् नोस्मभ्यं देवेषु स्थितं धनमायमदाप्रयच्छतु ॥ ५॥

अथ षष्ठी—

सनोअद्यवसुत्तयेक्रतुविद्गातुवित्तमः। वाजंजेषिश्रवोबृहत् ॥६॥१॥

सः। नः। अद्य। वसुत्तये। क्रतुऽवित्।
गातुवित्ऽतमः। वाजम्। जेषि। श्रवः। बृहत् ॥ ६ ॥ १ ॥

हे सोम क्रतुवित् क्रतूनां कर्मणां लंभको गातुवित्पुण्यलोकानां अतिशयेन मार्गस्य ज्ञाता त्वं अद्यास्मिन्नहनि नोस्माकं वसुत्तये धनलाभाय बृहन्महत् श्रवोन्नं वाजं बलंच जेषि जय॥६॥

॥ इति सप्तमस्य प्रथमे प्रथमोवर्गः ॥ १ ॥

सपवस्वेति षळृचं एकविंशं सूक्तं ऋष्याद्याः पूर्ववत् सपवस्वेत्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा–

सपवस्वमदायकंनृचक्षादेववीतये । इन्दविन्द्रायपीतये ॥ १ ॥

सः । पवस्व । मदाय । कम् । नृऽचक्षाः ।
देवऽवीतये । इन्दो इति । इन्द्राय । पीतये ॥ १ ॥

हे इन्दो सोम नृचक्षाः नृणां नेतॄणां द्रष्टा सत्वं देववीतये यज्ञायेन्द्रायेन्द्रस्य पीतये पानाय च मदाय मदार्थं च कं सुखं यथा भवति तथा पवस्व क्षर ॥१॥

अथ द्वितीया–

सनोअर्षाभिदूत्यं१ंत्वमिन्द्रायतोशसे । देवान्त्सखिभ्यआवरम् ॥२॥

सः । नः । अर्ष । अभि । दूत्यम् । त्वम् । इन्द्राय । तोशसे ।
देवान् । सखिऽभ्यः । आ । वरम् ॥ २ ॥

हे सोम त्वं नोस्माकं दूत्यं दूतस्यकर्माभिगच्छ । अपिच यस्त्वमिन्द्रायेन्द्रार्थं तोशसे पीयसे सत्वं सखिभ्यः प्रियेभ्योस्मभ्यं वरं श्रेष्ठं धनं देवानापवस्वेत्यर्थः ॥ २ ॥

अथ तृतीया–

उतत्वामरुणंवयंगोभिरञ्ज्मोमदायकम् । विनोरायेदुरोवृधि ॥ ३ ॥

उत । त्वाम् । अरुणम् । वयम् । गोभिः । अञ्ज्मः ।
मदाय । कम् । वि । नः । राये । दुरः । वृधि ॥ ३ ॥

उतापिच हे सोम यमरुणमरुणवर्णं त्वां मदाय मदार्थं वयमांगिरसायास्याः गोभिः गोविकारैः पयोभिः रंज्मोवासयामः संस्कुर्मः । कमिति पूरणं । सत्वं नोस्माकं राये धनाय दुरोद्वाराणि विवृधि विवृतानि कुरु ॥ ३ ॥

अथ चतुर्थी–

अत्यूंपवित्रमक्रमीद्वाजीधुरंनयामनि । इन्दुर्देवेषुपत्यते ॥ ४ ॥

अति । ॐ इति । पवित्रम् । अक्रमीत् । वाजी ।
धुरम् । न । यामनि । इन्दुः । देवेषु । पत्यते ॥ ४ ॥

इन्दुः सोमोवाज्यश्वोयामनि गमने धुरं न रथस्य धुरं यथा तथा पवित्रमत्यक्रमीदतिगच्छति । देवेषु देवानां मध्ये पत्यते गच्छति च ॥ ४ ॥

अथ पंचमी—

समीसखायोअस्वरन्वनेक्रीळन्तमत्यविम् । इन्दुंनावाअनूषत॥५॥

सम् । ईमिति । सखायः । अस्वरन् । वने । क्रीळन्तम् ।
अतिऽअविम् । इन्दुम् । नावाः । अनूषत ॥ ५॥

अत्यविमतिक्रान्तं दशापवित्रं वने उदके क्रीळन्तं संक्रीडमानमीमेनमिन्दुं सोमं सखायः प्रियस्तोतारः समस्वरन् संस्तुवन्ति । नावाः वाचोप्यनूषतास्तुवन् । नौ अक्षरमिति वाङ्नामसु पाठात् ॥ ५ ॥

अथ षष्ठी—

तयापवस्वधारयायथापीतोविचक्षसे । इन्दोस्तोत्रेसुवीर्यम्॥६॥२॥

तया । पवस्व । धारया । यया । पीतः । विऽचक्षसे ।
इन्दो इति । स्तोत्रे । सुऽवीर्यम् ॥ ६ ॥ २॥

हे इन्दो त्वं यया धारया पीतः सन् विचक्षसे विचक्षणाय स्तोत्रे स्तोत्राणां कर्त्रे पुरुषाय सुवीर्यं शोभनवीर्यं प्रयच्छसीतिशेषः । तया धारया पवस्व क्षर ॥ ६ ॥

॥ इति सप्तमस्य प्रथमे द्वितीयोवर्गः ॥ २ ॥

असृग्रन्निति षळृचं द्वाविंशं सूक्तं ऋष्याद्याः पूर्ववत् । असृग्रन्नित्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

असृग्रन्देववीतयेत्यासःकृत्व्याइव । क्षरन्तःपर्वतावृधः ॥ १ ॥

असृग्रन् । देवऽवीतये । अत्यासः । कृत्व्याःऽइव ।
क्षरन्तः । पर्वतऽवृधः ॥ १ ॥

पर्वतावृधः पर्वतैरभिषवग्रावभिर्वृद्धाः पर्वतेषु वा जाताः क्षरन्तः सोमाः देववीतये यज्ञाय अत्यासोऽश्वाः कुल्याइव । यथा कर्मण्याः अश्वास्तद्वदसृग्रन् सृज्यन्ते ॥ १ ॥

अथ द्वितीया—

परिष्कृतासइन्दवोयोषेवपित्र्यावती । वायुंसोमाअसृक्षत ॥ २ ॥

परिऽकृतासः । इन्दवः । योषाऽइव । पित्र्यऽवती ।
वायुम् । सोमाः । असृक्षत ॥ २ ॥

इन्दवोयागेषु क्लिद्यमानाः सोमाः परिष्कृतासः परिष्कृताः अलंकृताः सन्तः पित्र्यावती पितृमती योषेवालंकृता कन्यका यथा वरं प्रति गच्छति तद्वद्वायुं प्रत्यसृक्षत गच्छन्ति ॥ २ ॥

अथ तृतीया—

एतेसोमासइन्दवःप्रयस्वन्तश्चमूसुताः । इन्द्रंवर्धन्तिकर्मभिः ॥ ३ ॥

एते । सोमासः । इन्दवः । प्रयस्वन्तः । चमू इति ।
सुताः । इन्द्रम् । वर्धन्ति । कर्मऽभिः ॥ ३ ॥

इन्दवः दीप्ताः प्रयस्वन्तोन्नवन्तः एते अस्मिन्कर्मणि वर्तमाना अमी सोमासः सोमाः चमू चम्वोरधिषवणफलकयोः सुता अभिषुताःसन्तः कर्मभिर्यागैरिन्द्रं वर्धन्ति प्रवर्धयन्ति प्रीणयन्तीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

आधावतासुहस्त्यःशुक्रागृभ्णीतमन्थिना । गोभिःश्रीणीतमत्सरम् ॥ ४ ॥

आ । धावत । सुऽहस्त्यः । शुक्रा । गृभ्णीत ।
मन्थिना । गोभिः । श्रीणीत । मत्सरम् ॥ ४ ॥

हे सुहस्त्यः शोभनहस्ता ऋत्विज आधावत मां संप्रत्यागच्छत । मंथिना सह शुक्रा शुक्रं च गृभ्णीत गृह्णीत सोमं । मत्सरं सोमं गोभिर्गोविकारैः पयोभिः श्रीणीत संस्कुरुत च ॥ ४ ॥

अथ पंचमी—

सपवस्वधनंजयप्रयन्ताराधसोमहः । अस्मभ्यंसोमगातुवित् ॥५॥

सः । पवस्व । धनम्ऽजय । प्रऽयन्ता । राधसः ।
महः । अस्मभ्यम् । सोम । गातुऽवित् ॥ ५ ॥

हे धनंजय शत्रुसंबंधिधनानां जेतः सोम गातुविदभीष्टमार्गस्यलंभकोस्मभ्यं महोमहतो-राधसोधनस्य प्रयन्ता प्रदाता च सत्वं पवस्व क्षर ॥ ५ ॥

अथ षष्ठी—

एतंमृजन्तिमर्ज्यंपवमानंदशक्षिपः । इन्द्रायमत्सरंमदम् ॥६॥ ३॥

एतम् । मृजन्ति । मर्ज्यम् । पवमानम् । दश ।
क्षिपः । इन्द्राय । मत्सरम् । मदम् ॥ ६ ॥ ३ ॥

मर्ज्यं मर्जनीयं शोध्यं पवमानं क्षरन्तं मत्सरं मदकरमेतमिमं मदं सोमं दशसंख्याकाः क्षिपोंगुलयः । त्रिशः क्षिपइत्यंगुलिनामसुपाठात् । इन्द्राय इन्द्रार्थं मृजन्ति पवित्रे शोधयन्ति॥६॥

॥ इति सप्तमस्य प्रथमे तृतीयोवर्गः ॥ ३ ॥

अयासोमइति पंचर्चं त्रयोविंशंसूक्तं भृगुपुत्रस्य कवेरार्षं गायत्रं पवमानसोमदेवताकं । तथाचानुक्रान्तं—अयासोमः पंच कविर्भार्गवइति । उक्तोविनियोगः ।

तत्र प्रथमा—

अयासोमःसुकृत्ययामहश्चिदभ्यवर्धत । मन्दानउद्वृषायते ॥ १ ॥

अया । सोमः । सुऽकृत्यया । महः । चित् । अभि ।
अवर्धत । मन्दानः । उत् । वृषऽयते ॥ १ ॥

सोमः अया अनया सुकृत्यया शोभनया अभिषवादिलक्षणया क्रियया महश्चित् महतोदेवान् प्रत्यभ्यवर्धत प्रवृद्धोभूत् मन्दानोमोदमानः उद्वृषायते वृषवदाचरति । यथा मोदमानोवृषभः शब्दं करोति तथाभिषववेलायामुपरवेषु शब्दंकरोतीत्यर्थः ॥ १॥

अथ द्वितीया—

कृतानीद॑स्य॒कर्त्वा॒चेत॑न्तेदस्यु॒तर्हणा। ऋ॒णाचधृ॒ष्णुश्च॑यते ॥ २ ॥

कृ॒तानि॑। इत्। अ॒स्य॒। कर्त्वा॑। चेत॑न्ते।

द॒स्यु॒ऽतर्ह॑णा। ऋ॒णा। च॒। धृ॒ष्णुः। च॒य॒ते॒ ॥ २ ॥

अस्य यस्यैतस्य सोमस्य दस्युतर्हणा दस्यूनामसुराणां तर्हणानि नाशकानि कर्त्वा कर्माणि कृतानीत् अस्माभिरेव कृतानि सोयं धृष्णुर्धृष्टःसोमो यजमानानामृणाच ऋणान्यपि चयते कामप्रदानेन चातयति ॥ २ ॥

अथ तृतीया—

आत्सोमइन्द्रि॒योरसो॒वज्रः॑सहस्र॒साभु॑वत्। उ॒क्थंयद॑स्य॒जाय॑ते ॥ ३ ॥

आत्। सोमः॑। इ॒न्द्रि॒यः। रसः॑। वज्रः॑। स॒ह॒स्र॒ऽसाः।

भु॒व॒त्। उ॒क्थम्। यत्। अ॒स्य॒। जाय॑ते ॥ ३ ॥

यद्यदास्येन्द्रस्योक्थं शस्त्रं जायते प्रादुर्भवति तदा आदनन्तरमेवेन्द्रियः इन्द्रस्य प्रियकरोरसोबलवान् वज्रोवज्रसदृशः केनाप्यहिंस्यः सोमः सहस्रसा अस्मभ्यं अपरिमितस्य धनस्य दाता भवति ॥ ३ ॥

अथ चतुर्थी—

स्वयंक॒विर्वि॑ध॒र्तरि॒विप्रा॑य॒रत्न॑मिच्छति। यदी॑मर्मृ॒ज्यते॒धियः॑ ॥ ४ ॥

स्व॒यम्। क॒विः। वि॒ऽध॒र्तरि॑। विप्रा॑य। रत्न॑म्।

इ॒च्छ॒ति॒। यदि॑। म॒र्मृ॒ज्यते॑। धियः॑ ॥ ४ ॥

यदि कविः क्रान्तकर्मायं सोमो धियोधीभिः विभक्तिव्यत्ययः धीभिरंगुलीभिरित्यर्थः। मर्मृज्यते शोध्यते तर्हि स्वयं स्वयमेव विप्राय मेधाविने विधर्तरि कामानां विधातरीन्द्रे रत्नं रमणीयं धनमिच्छति। इन्द्रेण धनं दापयितुमिच्छतीत्यर्थः ॥ ४ ॥

अथ पञ्चमी—

सिषासतूरयीणांवाजेष्वर्वतामिव । भरेषुजिग्युषामसि ॥ ५ ॥४॥

सिसासतुः । रयीणाम् । वाजेषु । अर्वताम्ऽइव ।
भरेषु । जिग्युषाम् । असि ॥ ५ ॥ ४ ॥

हे सोम त्वं भरेषु संग्रामेषु जिग्युषां शत्रुं जयतां रयीणां धनानां सिषासतुः संभक्तुमिच्छुरसि भवसि शत्रून् जयद्भ्योधनानि प्रयच्छसि इत्यर्थः । तत्रदृष्टान्तः—वाजेषु संग्रामेष्वर्वतामिव अश्वानामिव यथा संग्रामं प्रविशद्भ्योऽश्वेभ्योघासं प्रयच्छन्ति तद्वदित्यर्थः ॥ ५ ॥

॥ इति सप्तमस्य प्रथमे चतुर्थोवर्गः ॥ ४ ॥

तंत्वेति पंचर्चं चतुर्विंशं सूक्तं ऋष्याद्याः पूर्ववत् । तंत्वेत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

तंत्वानृम्णानिबिभ्रतंसधस्थेषुमहोदिवः । चारुंसुकृत्ययेमहे ॥ १॥

तम् । त्वा । नृम्णानि । बिभ्रतम् । सधऽस्थेषु । महः ।
दिवः । चारुम् । सुऽकृत्यया । ईमहे ॥ १ ॥

महो दिवः महतोद्युलोकस्य सधस्थेषु सहस्थानेषु स्थितं नृम्णानि धनानि बिभ्रतमस्मदर्थं धारयन्तं चारुं कल्याणं तं भवमानं त्वा त्वां सुकृत्यया शोभनया क्रियया ईमहे धनानि याचामहे ॥ १ ॥

अथ द्वितीया—

संवृक्तधृष्णुमुक्थ्यंमहामहिव्रतंमदम् । शतंपुरोरुरुक्षणिम् ॥ २ ॥

संवृक्तऽधृष्णुम् । उक्थ्यम् । महाऽमहिव्रतम् ।
मदम् । शतम् । पुरः । रुरुक्षणिम् ॥ २ ॥

हे सोम संवृक्कधृष्णुं संवृक्ताः संछिन्ना धृष्णवो धर्षणशीलाः शत्रवो येनासौ संवृक्कधृष्णुस्तमुक्थ्यमुक्थार्हं प्रशंस्यं महामहिव्रतं मंहनीयबहुकर्माणं मदं मदकरं शतं बहूनि पुरः शत्रूणां पुराणि रुरुक्षणिं विनाशयन्तं त्वां धनानीमहइति संबन्धः ॥ २ ॥

अथ तृतीया—

अतस्त्वारयिमभिराजानंसुक्रतोदिवः ।सुपर्णोअव्यथिर्भरत् ॥ ३॥

अतः । त्वा । रयिम् । अभि । राजानम् । सुक्रतो इति सुऽक्रतो । दिवः । सुऽपर्णः । अव्यथिः । भरत् ॥ ३ ॥

हे सुक्रतो शोभनकर्मन् पवमानसोम रयिमभि धनंपतिं राजानं त्वा त्वां अतोदिवोमुष्मात् द्युलोकात् अव्यथिर्व्यथारहितः सुपर्णः श्येनोभरदाहरत् । तथाचनिगमान्तरं—आदायश्येनोअभरत्सोममिति ॥ ३ ॥

अथ चतुर्थी—

विश्वस्माइत्स्वर्दृशेसाधारणंरजस्तुरम् । गोपामृतस्यविर्भरत् ॥ ४ ॥

विश्वस्मै । इत् । स्वः । दृशे । साधारणम् । रजःऽतुरम् । गोपाम् । ऋतस्य । विः । भरत् ॥ ४ ॥

रजस्तुरमुदकस्य प्रेरकमृतस्यं यज्ञस्य गोपां गोपायितारं विश्वस्मै सर्वस्मै स्वर्दृशे सर्वद्रशे देवाय साधारणमित्समानमेवसन्तं सोमं विः पक्षी श्येनोभरत् स्वर्गादाहरत् ॥ ४ ॥

अथ पञ्चमी—

अधाहिन्वानइन्द्रियंज्यायोमहित्वमानशे । अभिष्टिकृद्विचर्षणिः ॥५॥५॥

अध । हिन्वानः । इन्द्रियम् । ज्यायः । महिऽत्वम् । आनशे । अभिष्टिऽकृत् । विऽचर्षणिः ॥ ५ ॥ ५ ॥

१ ऋ० सं० ३. ६. १५.

अधाथ विचर्षणिः कर्मणां विद्रष्टा अभिष्टिकृद्यजमानानामभीष्टस्य फलस्य कर्ता सोमः इन्द्रियं स्वकीयं बलं हिन्वानः प्रेरयन् ज्यायः प्रशस्यतरं महित्वं महत्त्वमानशे प्राप्नोति ॥५॥

॥ इति सप्तमस्य प्रथमे पञ्चमोवर्गः ॥ ५ ॥

पवस्वेति पंचर्चं पंचविंशं सूक्तं ऋष्याद्याः पूर्ववत् । पवस्वेत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

**पवस्ववृष्टिमासुनोपामूर्मिंदिवस्परि । अयक्ष्माबृहतीरिषः ॥ १ ॥**

**पवस्व । वृष्टिम् । आ । सु । नः । अपाम् । ऊर्मिम् । दिवः ।**
**परि । अयक्ष्माः । बृहतीः । इषः ॥ १ ॥**

हे सोम त्वं दिवोद्युलोकात् वृष्टिं नोस्माकमापवस्व समन्तात्कुरु । एतदेव दर्शयति—अपामुदकानामूर्मिं तरंगं दिवः पर्यापवस्व । अपिचायक्ष्माः यक्ष्मरहितानि अनामयानि बृहतीर्महांति इषोन्नानि आपवस्व ॥ १ ॥

अथ द्वितीया—

**तयापवस्वधारयायथागावइहागमन् । जन्यासउपनोगृहम् ॥ २ ॥**

**तया । पवस्व । धारया । यया । गावः । इह ।**
**आऽगमन् । जन्यासः । उप । नः । गृहम् ॥ २ ॥**

हे सोम त्वं तया तादृश्या धारया पवस्व क्षर । कीदृश्येत्यत्राह—यया यादृश्या त्वदीयया धारया जन्यासोजन्याः शत्रुजनपदभवागावः इहास्मिन्लोके नोस्माकं संबन्धिगृहमुपागमन्नुपागच्छन्ति ॥ २ ॥

अथ तृतीया—

**घृतंपवस्वधारयायज्ञेषुदेववीतमः । अस्मभ्यंवृष्टिमापव ॥ ३ ॥**

**घृतम् । पवस्व । धारया । यज्ञेषु । देवऽवीतमः ।**
**अस्मभ्यम् । वृष्टिम् । आ । पव ॥ ३ ॥**

हे सोम यज्ञेषु देववीतमोत्यन्तं देवकामस्त्वं अस्मभ्यं भार्गवेभ्यः कविभ्योघृतमुदकं । वर्न घृतमित्युदकनामसु पाठात् । धारया संपातेन पवस्व क्षर । वृष्टिं वर्षं वा आपवापवस्व ॥३॥

अथ चतुर्थी—

**सनऊर्जेव्य१ऽव्ययंपवित्रंधावधारया । देवासःशृणवन्हिकम् ॥ ४॥**

**सः । नः । ऊर्जे । वि । अव्ययम् । पवित्रम् । धाव ।**
**धारया । देवासः । शृणवन् । हि । कम् ॥ ४ ॥**

हे सोम सत्वं नोस्माकमूर्जे अन्नायाव्ययमविमयं पवित्रं धारया संपातेन विधाव प्राप्नुहि । देवासोदेवाः अपि हि कं श्रृणवत् गमनवेलायामुत्पन्नं तव शब्दं श्रृण्वन्तु ॥ ४ ॥

अथ पंचमी—

**पवमानोअसिष्यदद्रक्षांस्यपजङ्घनत् । प्रत्नवद्रोचयन्नुचः ॥५॥६॥**

**पवमानः । असिस्यदत् । रक्षांसि अपऽजङ्घनत् ।**
**प्रत्नऽवत् । रोचयन् । रुचः ॥ ५ ॥ ६ ॥**

रक्षांसि राक्षसानपजंघनदपघ्नन् रुचः आत्मीयादीप्तीः प्रत्नवत् पुराणवत् रोचयन् दीपयन् पवमानः सोमोसिस्यदत् स्यन्दते ॥ ५ ॥

॥ इति सप्तमस्य प्रथमे षष्ठोवर्गः ॥ ६ ॥

उत्तइति पंचर्चं षड्विंशं सूक्तं आंगिरसस्योचथ्यस्यार्षं गायत्रं पवमानसोमदेवताकं तथाचानुक्रान्तं—उत्तेशुष्मासउचथ्यइति । उक्तोविनियोगः ।

तत्र प्रथमा—

**उत्तेशुष्मासईरतेसिन्धोरूर्मेरिवस्वनः ।वाणस्यचोदयापविम्॥१॥**

**उत् । ते । शुष्मासः । ईरते । सिन्धोः । ऊर्मेःऽइव ।**
**स्वनः । वाणस्य । चोदय । पविम् ॥ १ ॥**

हे सोम ते तव शुष्मासः शुष्मावेगा उदीरते उद्गच्छन्ति । तत्रदृष्टान्तः—सिन्धोः समुद्रस्योर्मेरिव यथा तरंगात्स्वनोध्वनिरुद्गच्छति तद्वदित्यर्थः । सत्वं वाणस्य विसृष्टस्य वाणस्य नालस्य वादित्रविशेषस्य पविं शब्दं । पविः भारतीति वाङ्नामसुपाठात् । चोदय प्रेरय । वेगेन स्यंदमानस्त्वं विसृष्टवाणशब्दसदृशं शब्दं कुर्वित्यर्थः ॥ १ ॥

अथ द्वितीया—

प्रसवेतउदीरतेतिस्रोवाचोमखस्युवः । यदव्यएषिसानवि ॥ २ ॥

प्रऽसवे । ते । उत् । ईरते । तिस्रः । वाचः । मखस्युवः ।
यत् । अव्ये । एषि । सानवि ॥ २ ॥

हे सोम ते तव प्रसवेसति मखस्युवो यज्ञमिच्छवो यजमानस्य तिस्रोवाचः ऋग्यजुःसामात्मकानि त्रीणि वाक्यान्युदीरते उद्गच्छन्ति । कदेत्यतआह—यद्यदा सानवि व्युच्छ्रिते अव्ये अविमये पवित्रे एषि त्वं गच्छसि ॥ २ ॥

अथ तृतीया—

अव्योवारेपरिप्रियंहरिंहिन्वन्त्यद्रिभिः । पवमानंमधुश्चुतम् ॥ ३ ॥

अव्यः । वारे । परि । प्रियम् । हरिम् । हिन्वन्ति ।
अद्रिऽभिः । पवमानम् । मधुऽश्चुतम् ॥ ३ ॥

प्रियं देवानां प्रीतिकरं हरिं हरितवर्णमद्रिभिः ग्रावभिरभिषुतं मधुश्चुतं मधुनोरसस्य च्यावयितारं पवमानं सोममव्योवेर्वारे वाले परिहिन्वन्ति ऋत्विजः परिप्रेरयन्ति ॥ ३ ॥

अथ चतुर्थी—

आपवस्वमदिन्तमपवित्रन्धारयाकवे । अर्कस्ययोनिमासदम् ॥ ४ ॥

आ । पवस्व । मदिन्ऽतम । पवित्रम् । धारया । कवे ।
अर्कस्य । योनिम् । आऽसदम् ॥ ४ ॥

हे मदिन्तम मादयितृतम कवे क्रान्तकर्मन् सोम अर्कस्यार्चनीयस्येन्द्रस्य योनिं उदरं स्थानमासदं प्राप्तुं पवित्रमतीत्य धारया संपातेनापवस्व आभिमुख्येन क्षर। यद्यप्येषा पूर्वस्मिन्नध्याये व्याकृता तथापि मन्दमतीनां विस्मरणशंकया पुनर्व्याख्याता ॥ ४ ॥

अथ पंचमी—

सपवस्वमदिन्तमगोभिरञ्जानोअक्तुभिः। इन्दविन्द्रायपीतये ॥५॥७॥

सः। पवस्व। मदिन्ऽतम। गोभिः। अञ्जानः। अक्तुऽभिः।
इन्दो इति। इन्द्राय। पीतये ॥ ५ ॥ ७ ॥

हे मदिन्तम मादयितृतमेन्दो सोम अक्तुभिरंजनसाधनभूतैर्गोभिः गोविकारैः पयोभिरंजानोज्यमानः संस्क्रियमाणः सत्वं इन्द्रायेन्द्रस्य पीतये पानाय पवस्व क्षर ॥ ५ ॥

॥ इति सप्तमस्य प्रथमे सप्तमोवर्गः ॥ ७ ॥

अध्वर्योइति पंचर्चं सप्तविंशंसूक्तं आंगिरसस्य उचथ्यस्यार्षं गायत्रं पवमानसोमदेवताकं। तथाचानुक्रम्यते--अध्वर्योइति। गतःसूक्तविनियोगः।

तत्र प्रथमा—

अध्वर्योअद्रिभिःसुतंसोमंपवित्रआसृज। पुनीहीन्द्रायपातवे ॥१॥

अध्वर्यो इति। अद्रिऽभिः। सुतम्। सोमम्। पवित्रे।
आ। सृज। पुनीहि। इन्द्राय। पातवे ॥ १ ॥

हे अध्वर्यो अद्रिभिर्ग्रावभिः सुतमभिषुतं सोमं पवित्रे आसृज। एवदेव दर्शयति इन्द्रायेन्द्रस्य पातवे पानाय पुनीहि पावय ॥ १ ॥

अथ द्वितीया—

दिवःपीयूषमुत्तमंसोममिन्द्रायवज्रिणे। सुनोतामधुमत्तमम् ॥ २ ॥

दिवः। पीयूषम्। उत्ऽतमम्। सोमम्। इन्द्राय। वज्रिणे।
सुनोत। मधुमत्ऽतमम् ॥ २ ॥

हे अध्वर्यवो यूयं मधुमत्तममतिशयेन मधुमन्तं दिवोद्युलोकस्य पीयूषममृतमुत्तमं श्रेष्ठं सोमं वज्रिणे वज्रवते इन्द्राय सुनोताभिषुणुत ॥ २ ॥

अथ तृतीया—

तवत्यइन्दोअन्धसोदेवामधोर्व्यश्नते । पवमानस्यमरुतः ॥ ३ ॥

तव । त्ये । इन्दो इति । अन्धसः । देवाः । मधोः ।
वि । अश्नते । पवमानस्य । मरुतः ॥ ३ ॥

हे इन्दो सोम तव संबन्धिनं मधोर्मदकरस्य पवमानस्य पूयमानमंधसोन्नं कर्मणि षष्ठी त्ये ते इमे देवाइन्द्रादयोमरुतश्च व्यश्नते व्याप्नुवते व्याप्नुवन्तीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

त्वंहिसोमवर्धयन्त्सुतोमदायभूर्णये । वृषन्त्स्तोतारमूतये ॥ ४ ॥

त्वम् । हि । सोम । वर्धयन् । सुतः । मदाय ।
भूर्णये । वृषन् । स्तोतारम् । ऊतये ॥ ४ ॥

हे सोम सुतोभिषुतस्त्वं वर्धयन् देवान् प्रवृद्धान् कुर्वन् वृषन् कामान् वर्षन् भूर्णये क्षिप्राय मदायोतये रक्षणायच स्तोतारमभिगच्छसीत्यर्थः ॥४॥

अथ पञ्चमी—

अभ्यर्षविचक्षणपवित्रंधारयासुतः । अभिवाजमुतश्रवः ॥ ५॥८॥

अभि । अर्ष । विऽचक्षण । पवित्रम् । धारया । सुतः ।
अभि । वाजम् । उत । श्रवः ॥ ५ ॥ ८ ॥

हे विचक्षण सोम सुतोभिषुतस्त्वं पवित्रमभि प्रति धारयार्षगच्छ । उतापिचास्माकं वाजमन्नं श्रवः कीर्तिंचाभिरक्षेत्यर्थः ॥ ५ ॥

॥ इति सप्तमस्य प्रथमेष्टमोवर्गः ॥ ८ ॥

परिद्युक्षइति पंचर्चमष्टाविंशंसूक्तं ऋष्याद्याः पूर्ववत् । परिद्युक्षेत्यनुक्रान्तं । उक्तोविनियोगः ।

तत्र प्रथमा—

परिद्युक्षःसनद्रयिर्भरद्वाजंनोअन्धसा । सुवानोअर्षपवित्रआ ॥१॥

परि । द्युक्षः । सनत्ऽरयिः । भरत् । वाजम् । नः ।
अन्धसा । सुवानः । अर्ष । पवित्रे । आ ॥ १ ॥

द्युक्षोदीप्तः संनद्रयिः दीयमानधनः सोमोनोस्माकं वाजं बलमंधसान्नेनसह परिभरत् प-
रिभरतु । अथप्रत्यक्षस्तुतिः हे सोम सुवानोभिषूयमाणंस्त्वं पवित्रे आर्ष क्षर ॥ १ ॥

अथ द्वितीया—

तवप्रत्नेभिरध्वभिरव्योवारेपरिप्रियः । सहस्रधारोयात्तना ॥ २ ॥

तव । प्रत्नेभिः । अध्वऽभिः । अव्यः । वारे । परि ।
प्रियः । सहस्रऽधारः । यात् । तना ॥ २ ॥

हे सोम तव संबंधी प्रियोदेवानां प्रीतिकरः सहस्रधारोबहुधारः तना विस्तृतसारोरसः
प्रत्नेभिः पुराणैः अध्वभिर्मार्गैः अव्योवारे वाले दशापवित्रे परियात् परिगच्छति ॥ २ ॥

अथ तृतीय—

चरुर्नयस्तमीङ्खयेन्दोनदानमीङ्खय । वधैर्वधस्नवीङ्खय ॥ ३ ॥

चरुः । न । यः । तम् । ईङ्खय । इन्दो इति । न । दानम् ।
ईङ्खय । वधैः । वधस्नो इति वधऽस्नो । ईङ्खय ॥ ३ ॥

हे सोम चरुर्न चरुरिव यः पूर्णोदनो भवति तमींखयास्मान्प्रापय । अपिच हे इन्दो न
इदानीं दानं देयमींखय हे वधस्नो प्रहारेण प्रस्रवणशील सोम वधैर्ग्राव्णां प्रहारैरींखय ॥३॥

अथ चतुर्थी—

निशुष्ममिन्दवेषांपुरुहूतजनानाम् । योअस्माँआदिदेशति ॥४॥

नि । शुष्मम् । इन्दो इति । एषाम् । पुरुऽहूत ।
जनानाम् । यः । अस्मान् । आऽदिदेशति ॥ ४ ॥

हे पुरुहूत बहुभिराहूतेन्दो सोम त्वं यः शुष्मो येषां शत्रुजनानां बलमस्मानादिदेशति बाधार्थमाह्वयति एषां शत्रुजनानां तं शुष्मं बलं नि न्यक्कुर्विति शेषः ॥ ४ ॥

अथ पञ्चमी–

शतंनइन्दऊतिभिःसहस्रंवाशुचीनाम् । पवस्वमंहयद्रयिः ॥५॥९॥

शतम् । नः । इन्दो इति । ऊतिऽभिः । सहस्रम् । वा ।
शुचीनाम् । पवस्व । मंहयत्ऽरयिः ॥ ५ ॥ ९ ॥

हे इन्दो सोम मंहयद्रयिः प्रदीयमानधनस्त्वं नोस्माकमूतिभिरूतिभ्योविभक्तिव्यत्ययः रक्षार्थं शुचीनां शुद्धानां तवांशभूतानां सोमानां शतं सहस्रं वा पवस्व क्षर ॥ ५ ॥

॥ इति सप्तमस्य प्रथमे नवमोवर्गः ॥ ९ ॥

उत्तइति चतुर्ऋचमेकोनत्रिंशं सूक्तं काश्यपस्यावत्सारस्यार्षं गायत्रं पवमानसोमदेवताकं तथाचानुक्रान्तं–उत्तचतुष्कमवत्सारइति उक्तोविनियोगः ।

तत्र प्रथमा–

उत्तेशुष्मासोअस्थूरक्षोभिन्दन्तोअद्रिवः । नुदस्वयाःपरिस्पृधः ॥१॥

उत् । ते । शुष्मासः । अस्थुः । रक्षः । भिन्दन्तः ।
अद्रिऽवः । नुदस्व । याः । परिऽस्पृधः ॥ १ ॥

हे अद्रिवोग्रावव‌न् सोम ते तव शुष्मासः शुष्मावेगाः रक्षोराक्षसानभिन्दन्तो विदारयन्तः उदस्थुरुत्तिष्ठन्ति याः परिस्पृधः स्पर्धमानाः शत्रुसेनाः अस्मान् प्रतिबाधन्ते तास्त्वं नुदस्व प्रेरय बाधस्वेत्यर्थः ॥ १ ॥

अथ द्वितीया–

अयानिजघ्निरोजसारथसङ्गेधनेहिते । स्तवाअबिभ्युषाहृदा ॥२॥

अया । निऽजघ्निः । ओजसा । रथऽसङ्गे । धने ।
हिते । स्तवै । अबिभ्युषा । हृदा ॥ २ ॥

हे सोम त्वं अयानेन कृतेनौजसा बलेन निजघ्निः शत्रून् हन्तुं शीलवान् तं त्वामबिभ्युषा अभीतेन हृदा मनसा युक्तोहं रथसंगेस्माकं रथानां संगे हिते शत्रुषु निहिते धने च निमित्ते स्तवै स्तौमि ॥ २ ॥

अथ तृतीया–

**अस्यंव्रतानिनाधृषेपवमानस्यदूढ्यां । रुजयस्त्वांपृतन्यति ॥ ३ ॥**

**अस्य । व्रतानि । न । आऽधृषे । पवमानस्य । दुःऽध्या । रुज । यः । त्वा । पृतन्यति ॥ ३ ॥**

हे सोम पवमानस्य क्षरतोयस्यास्य तव व्रतानि कर्माणि दूढ्या दुर्बुद्धिना राक्षसेन नाधृषे आधर्षयितुमशक्यानि । सत्वं त्वां योदुर्बुद्धिःशत्रुः पृतन्यति योद्धुं इच्छति तं रुज बाधस्व ॥३॥

अथ चतुर्थी–

**तंहिन्वन्तिमदच्युतंहरिंनदीषुवाजिनम् । इन्दुमिन्द्रायमत्सरम् ॥४॥१०॥**

**तम् । हिन्वन्ति । मदऽच्युतम् । हरिम् । नदीषु । वाजिनम् । इन्दुम् । इन्द्राय । मत्सरम् ॥ ४ ॥ १० ॥**

मदच्युतं मदस्य च्यावयितारं हरिं हरितवर्णं वाजिनं बलिनं मत्सरं मदकरं तमिन्दुं सोमं नदीषु वसतीवरीष्विन्द्रायेन्द्रार्थं हिन्वन्ति ऋत्विजः प्रेरयन्ति ॥ ४ ॥

॥ इति सप्तमस्य प्रथमे दशमोवर्गः ॥ १० ॥

अस्यप्रत्नामिति चतुर्ऋचं त्रिंशं सूक्तं ऋष्याद्याःपूर्ववत् । अस्यप्रत्नामित्यनुक्रान्तं । उक्तोविनियोगः ।

तत्र प्रथमा–

**अस्यप्रत्नामनुद्युतंशुक्रंदुदुह्रेअह्रयः । पयःसहस्रसामृषिम् ॥ १ ॥**

**अस्य । प्रत्नाम् । अनु । द्युतम् । शुक्रम् । दुदुह्रे । अह्रयः । पयः । सहस्रऽसाम् । ऋषिम् ॥ १ ॥**

अस्य सोमस्य प्रत्नां पुराणां द्युतं द्योतमानं तनुमनु शुक्रं दीप्तं सहस्रसां अभिलषितस्यापरिमितस्य कर्मफलस्य दातारं ऋषिं सरणशीलं पयः पातव्यं रसमह्वयः कवयोदुदुह्रे दुहन्ति ॥ १ ॥

अथ द्वितीया—

अयंसूर्यइवोपदृगयंसरांसिधावति । सप्तप्रवतआदिवम् ॥ २ ॥

अयम् । सूर्यःऽइव । उपऽदृक् । अयम् । सरांसि ।
धावति । सप्त । प्रऽवतः । आ । दिवम् ॥ २ ॥

अयं सोमः सूर्यइव यथासूर्यः सर्वस्यलोकस्योपद्रष्टा तद्वत् कर्मणामुपदृगुपद्रष्टा अपि चायं सोमः सरांसि त्रिंशदुक्थपात्राणीति केचिद्वर्णयन्ति अपरेतु त्रिंशदहोरात्राणि सरांसीति तानि धावति गच्छति । तथाचयास्कः—तत्रैतद्याज्ञिकावेदयन्ते त्रिंशदुक्थपात्राणि माध्यन्दिने सवनएकदेवतानि तान्येतस्मिन्कालएकेनप्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येतिनैरुक्ताइति[1] । अपिचायं सोमोदिवमधिकृत्य सप्तप्रवतः सप्तनदीरातिष्ठति ॥ २ ॥

अथ तृतीया—

अयंविश्वानितिष्ठतिपुनानोभुवनोपरि । सोमोदेवोनसूर्यः ॥ ३ ॥

अयम् । विश्वानि । तिष्ठति । पुनानः । भुवना ।
उपरि । सोमः । देवः । न । सूर्यः ॥ ३ ॥

पुनानः पूयमानोयं सोमो विश्वानि सर्वाणि भुवना भुवनानि सर्वेषां भुवनानामुपरि तिष्ठति । तत्रदृष्टान्तमाह—देवोन सूर्यः यथा सूर्योदेवः सर्वेषां भुवनानामुपरि तिष्ठति तद्वदयं सोमोपीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

परिणोदेववीतयेवाजाँअर्षसिगोमतः । पुनानइन्दविन्द्रयुः ॥ ४ ॥ ११ ॥

---

१ नि० ५. ११.

परि । नः । देवऽवीतये । वाजान् । अर्षसि । गोऽमतः ।
पुनानः । इन्दो इति । इन्द्रऽयुः ॥ ४ ॥ ११ ॥

हे इन्दो सोम इन्द्रयुरिन्द्रकामः पुनानः पूयमानस्त्वं नोस्माकं देववीतये यज्ञाय गोमतोगोयुक्तानि वाजानन्नानि पर्यर्षसि परितः क्षरेत्यर्थः ॥ ४ ॥

॥ इति सप्तमस्य प्रथमे एकादशोवर्गः ॥ ११ ॥

यवंयवंनइति चतुर्ऋचमेकत्रिंशं सूक्तं काश्यपस्यावत्सारस्यार्षं गायत्रं पवमानसोमदेवताकं । यवंयवमित्यनुक्रान्तं । गतोविनियोगः ॥

तत्र प्रथमा—

यवंयवंनोअन्धसापुष्टंपुष्टंपरिस्रव । सोमविश्वाचसौभगा ॥ १ ॥

यवम्ऽयवम् । नः । अन्धसा । पुष्टम्ऽपुष्टम् । परि ।
स्रव । सोम । विश्वा । च । सौभगा ॥ १ ॥

हे सोम त्वं नोस्माकं पुष्टंपुष्टं बहुलं यवंयवं पुनःपुनर्युतं रसमन्धसान्नात्मना परिस्रव धारया क्षर । अन्नप्रार्थयितुस्तृष्णयात्यन्तं पीडितत्वादाबाधेचेति द्विर्भावः । पीडाप्रयोक्तृधर्मो नाभिधेयधर्मइत्युक्तं । अपिच विश्वा विश्वानि सौभगा सौभगानि धनानि परिस्रव ॥ १ ॥

अथ द्वितीया—

इन्दोयथातवस्तवोयथातेजातमन्धसः । निबर्हिषिप्रियेसदः ॥ २ ॥

इन्दो इति । यथा । तव । स्तवः । यथा । ते । जातम् ।
अन्धसः । नि । बर्हिषि । प्रिये । सदः ॥ २ ॥

हे इन्दो सोमान्धसोन्नरूपस्य तव संबन्धी स्तवः स्तवनं स्तोत्रं तथा ते तव जातं जन्म यथा प्रादुर्भूतमस्ति तथात्वं प्रिये प्रीणयितरि बर्हिषि अस्मद्यागे निषदः निषण्णोभव ॥ २ ॥

अथ तृतीया—

उतनोगोविदश्ववित्पवस्वसोमान्धसा । मक्षूतमेभिरहभिः ॥ ३ ॥

उत । नः । गोऽवित् । अश्वऽवित् । पवस्व । सोम ।
अन्धसा । मक्षुऽतमेभिः । अहऽभिः ॥ ३ ॥

उतापिच हे सोम नोस्माकं गोविद्गोप्रदोश्वविदश्वप्रदश्च त्वं मक्षूतमेभिर्मक्षूतमैरतिशयेन शीघ्रैरहभिरहोभिर्हेतुभिरंधसान्नेन पवस्व धारया क्षर ॥ ३ ॥

अथ चतुर्थी—

योजिनातिनजीयतेहन्तिशत्रुमभीत्य । सपवस्वसहस्रजित् ॥४॥१२॥

यः । जिनाति । न । जीयते । हन्ति । शत्रुम् । अभिऽइत्य ।
सः । पवस्व । सहस्रऽजित् ॥ ४ ॥ १२ ॥

हे सहस्रजित् सहस्रसंख्यानां शत्रूणां जेतः सोम योभवान् जिनाति शत्रून् हन्ति नजीयते स्वयंशत्रुभिर्नजीयते नहन्यतइत्यर्थः । शत्रुमभीत्य शत्रुं स्वयमभ्येत्य हन्ति नच स्वयं शत्रुभिरभिभूयते सत्वं पवस्व क्षर ॥ ४ ॥

॥ इति सप्तमस्य प्रथमे द्वादशोवर्गः ॥ १२ ॥

परिसोमइति चतुर्ऋचं द्वात्रिंशं सूक्तं ऋष्याद्याः पूर्ववत् । परिसोमइत्यनुक्रान्तं । उक्तोविनियोगः ।

तत्र प्रथमा—

परिसोमऋतंबृहदाशुःपवित्रेअर्षति । विघ्नन्रक्षांसिदेवयुः ॥ १ ॥

परि । सोमः । ऋतम् । बृहत् । आशुः । पवित्रे । अर्षति ।
विऽघ्नन् । रक्षांसि । देवऽयुः ॥ १ ॥

आशुः क्षिप्रकारी देवयुर्देवकामः सोमः पवित्रे स्थित्वा रक्षांसि राक्षसान् विघ्नन् निघ्नन् । बृहन्महद्दतमन्नं पर्यर्षति परिगमयति अस्मभ्यं प्रयच्छतीत्यर्थः ॥ १ ॥

अथ द्वितीया—

यत्सोमोवाजमर्षतिशतंधाराअपस्युवः । इन्द्रस्यसख्यमाविशन् ॥ २ ॥

यत् । सोमः । वाजम् । अर्षति । शतम् । धाराः । अपस्युवः ।
इन्द्रस्य । सख्यम् । आऽविशन् ॥ २ ॥

यद्यदा अपस्युवः कर्मकामाः शतं शतसंख्याकाः धाराः सोमस्यधाराः इन्द्रस्य सख्यं सखित्वं आविशन् प्राप्नुवन्ति । तदा सोमोवाजमन्नमर्षति गमयति अस्मभ्यं प्रयच्छतीत्यर्थः॥२॥

अथ तृतीया—

अभित्वायोषणोदशजारंनकन्यानूषत । मृज्यसेसोमसातये ॥३॥

अभि । त्वा । योषणः । दश । जारम् । न । कन्या ।
अनूषत । मृज्यसे । सोम । सातये ॥ ३ ॥

हे सोम त्वा त्वां याः दशसंख्याका योषणोंगुलयः कन्या पितृमतीकन्यका जारंन यथा प्रियमभिशब्दायते तद्वदभ्यनूषताभिशब्दायन्ते । ताभिः सातयेस्माकं धनस्य लाभाय मृज्यसे इन्द्रार्थं शोध्यसे ॥ ३ ॥

अथ चतुर्थी—

त्वमिन्द्रायविष्णवेस्वादुरिन्दोपरिस्रव । नॄन्त्स्तोतॄन्पाह्यंहसः ॥४॥१३॥

त्वम् । इन्द्राय । विष्णवे । स्वादुः । इन्दो इति । परि ।
स्रव । नॄन् । स्तोतॄन् । पाहि । अंहसः ॥ ४ ॥ १३ ॥

हे इन्दो सोम स्वादुः प्रियरसस्त्वमिन्द्राय इन्द्रार्थं विष्णवे विष्ण्वर्थंच परिस्रव परिक्षर । नॄन् कर्मणां नेतॄन् स्तोतॄन् त्वद्विषयाणां स्तुतीनां कर्तॄन् अंहसोदुरितात्पाहि रक्ष च ॥ ४॥

॥ इति सप्तमस्य प्रथमे त्रयोदशोवर्गः ॥१३॥

प्रतेधाराइति चतुर्ऋचं त्रयस्त्रिंशंसूक्तं ऋष्याद्याःपूर्ववत् । प्रतेधाराइत्यनुक्रान्तं । उक्तोविनियोगः।

तत्रप्रथमा—

प्रतेधाराअसश्चतोदिवोनयन्तिवृष्टयः । अच्छावाजंसहस्रिणम् ॥१॥

प्र । ते । धारा॑ः । अ॒स॒श्चत॑ः । दि॒वः । न । य॒न्ति॒ ।
वृ॒ष्टय॑ः । अच्छ॑ । वाज॑म् । स॒ह॒स्रिण॑म् ॥ १ ॥

हे सोम ते तव असश्चतः संगरहिताधाराः सहस्रिणमपरिमितसंख्याकं वाजमन्नमच्छास्मदर्थं प्रयन्ति प्रगच्छन्ति । तत्रदृष्टान्तः—दिवोन वृष्टयः यथा द्युलोकात् वर्षधारा निःसंगाः प्रजानामपरिमितमन्नं प्रयन्ति तद्वदित्यर्थः ॥ १॥

अथ द्वितीया—

अ॒भि प्रि॒याणि॒ काव्या॒ विश्वा॒ चक्षा॑णो अर्षति । हरि॑स्तुञ्जा॒न आयु॑धा ॥२॥

अ॒भि । प्रि॒याणि॑ । काव्या॑ । विश्वा॑ । चक्षा॑णः ।
अ॒र्ष॒ति॒ । हरि॑ः । तु॒ञ्जा॒नः । आयु॑धा ॥ २ ॥

हरिर्हरितवर्णः सोमो विश्वा विश्वानि प्रियाणि देवानां प्रीतिकराणि काव्या काव्यानि कर्माणि चक्षाणः पश्यन् आयुधा स्वकीयान्यायुधानि तुंजानो राक्षसान्प्रति प्रेरयंश्चाभ्यर्षति यागं प्रति गच्छति ॥ २ ॥

अथ तृतीया—

स म॑र्मृजा॒न आ॒युभि॒रिभो॒ राजे॑व सुव्र॒तः । श्ये॒नो न वंसु॑ षीदति ॥ ३॥

सः । म॒र्मृ॒जा॒नः । आ॒युऽभि॑ः । इभ॑ः । राजा॑ऽइव ।
सु॒ऽव्र॒तः । श्ये॒नः । न । वंसु॑ । सी॒द॒ति॒ ॥ ३ ॥

सुव्रतः सुकर्मा ससोमः आयुभिर्मनुष्यैः ऋत्विग्भिर्मर्मृजानः शोध्यमानः इभोगतभयो राजेव यथा राजा । श्येनोन यथा च श्येनः तथा वंसूदकेषु वसतीवरीषु सीदति ॥ ३ ॥

अथ चतुर्थी—

स नो॒ विश्वा॑ दि॒वो वसू॒तो पृ॑थि॒व्या अधि॑ । पु॒ना॒न इ॑न्द॒वा भ॑र ॥ ४॥१४॥

सः । न॒ः । विश्वा॑ । दि॒वः । वसु॑ । उ॒तो इति॑ । पृ॒थि॒व्याः ।
अधि॑ । पु॒ना॒नः । इ॒न्दो॒ इति॑ । आ । भ॒र ॥ ४ ॥ १४ ॥

हे इन्दो सोम पुनानः पवमानस्त्वं दिवोधि दिविस्थितानि उतो अपिच पृथिव्याअधि पृथिव्यां स्थितानि। अधीति सप्तम्यर्थानुवादः। विश्वा विश्वानि वसु वसूनि नोस्मभ्यमाभराहर ॥४॥    ॥ इति सप्तमस्य प्रथमे चतुर्दशोवर्गः ॥ १४ ॥

तरत्सइतिचतुर्ऋचं चतुस्त्रिंशंसूक्तं ऋष्याद्याःपूर्ववत्। तरत्सइत्यनुक्रान्तं। उक्तोविनियोगः।

तत्र प्रथमा—

तरत्समन्दीधावतिधारासुतस्यान्धसः। तरत्समन्दीधावति ॥१॥

तरत्। सः। मन्दी। धावति। धारा। सुतस्य। अन्धसः।
तरत्। सः। मन्दी। धावति ॥ १ ॥

मंदी देवानां हर्षकरः ससोमः तरत् स्तोतॄन् पाप्मनः सकाशात्तारयन् धावति पवते। तदेव दर्शयति सुतस्याभिषुतस्यांधसो देवानामन्नात्मकस्य सोमस्य धारा धावतीति। पुनरपि तदेवाहात्यन्तादरार्थं तरत्समन्दी धावति। यद्वास्याऋचोयास्केनोक्तोर्थोद्रष्टव्यस्तद्यथा—तरतिसपापंसर्वं मंदी यः स्तौति धावति गच्छत्यूर्ध्वांगतिं धारासुतस्यांधसो धारयाभिषुतस्य सोमस्य मंत्रपूतस्य वाचास्तुतस्येति[1] ॥ १ ॥

अथ द्वितीया:-

उस्रावेदवसूनांमर्तस्यदेव्यवसः। तरत्समन्दीधावति ॥ २ ॥

उस्रा। वेद। वसूनाम्। मर्तस्य। देवी। अवसः। तरत्।
सः। मन्दी। धावति ॥ २ ॥

वसूनां धनानां उस्रोत्सरणशीला प्रदात्री देवी द्योतमाना स्तूयमानावा यस्य सोमस्य धारा मर्तस्य मनुष्यं यजमानं अवसोरक्षितुं वेद जानाति। सिद्धमन्यत् ॥ २॥

अथ तृतीया—

ध्वस्रयोःपुरुषन्त्योरासहस्राणिदद्महे। तरत्समन्दीधावति ॥ ३ ॥

---

१ नि० १३. ६.

ध्वस्रयोः । पुरुऽसन्त्योः । आ । सहस्राणि । दद्महे ।
तरत् । सः । मन्दी । धावति ॥ ३ ॥

ध्वस्रयोः पुरुषंत्योर्ध्वंस्रः कश्चिद्राजा पुरुषन्तिश्च कश्चित् तयोरुभयोरन्नेतरेतरयोगविवक्षया द्विवचनं द्रष्टव्यं । सहस्राणि धनानां सहस्राण्यादद्महे वयं प्रतिगृह्णीमः । तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयतइति सोमस्यस्तुतिः । सिद्धमन्यत् । यथा वत्सारएतयोर्धनानि प्रतिजग्राहैवं तरंतपुरुमीह्लौ प्रतिजगृहतुः । तथाच शाट्यायनकं—अथहवैतरंतपुरुमीह्लौ वैददश्वीध्वस्रयोः पुरुषंत्योर्बहुप्रतिगृह्य गरगिराविवमेनातें तौहस्मांगुल्यासातं प्रतिमृशाते तावकामयेतामसातंनाविवेदं सातंस्यादात्तमिवैव नप्रतिगृहीतमितिभावे तच्चतुर्ऋचमपश्यतां तेनमत्यैतां ततोवैतयोरसातं सातमभवदात्तमिवैव नप्रतिगृहीतं स्यःप्रतिप्रतिगृह्य कामयेतेत्यादि॥ ३॥

अथ चतुर्थी—

आययोस्त्रिंशतंतनासहस्राणिचदद्महे । तरत्समन्दीधावति ॥४॥१५॥

आ । ययोः । त्रिंशतम् । तना । सहस्राणि । च । दद्महे ।
तरत् । सः । मन्दी । धावति ॥ ४ ॥ १५ ॥

ययोर्ध्वंस्रपुरुषंत्योस्त्रिंशतं त्रीणिशतानि सहस्राणि तना वस्त्राण्यादद्महे वयंप्रतिगृह्णीमः । तयोरस्माभिः प्रतिगृहीतं तत्सर्वमप्रतिगृहीतमस्त्विति सोमं ऋषिः प्रार्थयते इति सोमस्यैवस्तुतिः । सिद्धमन्यत् ॥ ४ ॥

॥ इति सप्तमस्य प्रथमे पञ्चदशोवर्गः ॥ १५ ॥

पवस्वेति चतुर्ऋचं पंचत्रिंशं सूक्तं ऋष्याद्याःपूर्ववत् । पवस्वेत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

पवस्वगोजिदश्वजिद्विश्वजित्सोमरण्यजित् । प्रजावद्रत्नमाभर ॥१॥

पवस्व । गोऽजित् । अश्वऽजित् । विश्वऽजित् । सोम ।
रण्यऽजित् । प्रजाऽवत् । रत्नम् । आ । भर ॥ १ ॥

हे सोम गोजित् शत्रूणां गवां जेता अश्वजित् अश्वानामपि जेता विश्वजित् विश्वस्य जगतोजेता रण्यजित् रमणीयस्य धनस्यापि जेता त्वं पवस्व धारया क्षर । अपिचास्मभ्यं प्रजावत् पुत्राद्युपेतं रत्नं रमणीयं धनमाभराहर ॥ १ ॥

अथ द्वितीया–

पवस्वाद्भ्योअदाभ्यःपवस्वौषधीभ्यः । पवस्वधिषणाभ्यः ॥ २ ॥

पवस्व । अत्ऽभ्यः । अदाभ्यः । पवस्व ।
ओषधीभ्यः । पवस्व । धिषणाभ्यः ॥ २ ॥

हे सोम त्वमद्भ्योवसतीवरीभ्योदाभ्योंशुभ्यश्च पवस्व क्षर । अपिचौषधीभ्यः पवस्व क्षर । किंच धिषणाभ्योग्रावभ्यः पवस्व क्षर ॥ २ ॥

अथ तृतीया–

त्वंसोमपवमानोविश्वानिदुरितातर । कविःसीदनिबर्हिषि ॥ ३ ॥

त्वम् । सोम । पवमानः । विश्वानि । दुःऽइता । तर ।
कविः । सीद । नि । बर्हिषि ॥ ३ ॥

हे सोम पवमानः पूयमानः कविः क्रान्तकर्मा त्वं विश्वानि सर्वाणि दुरिता दुरितानि राक्षसैः कृतान्युपद्रवाणि तर निराकुरु अस्मिन् बर्हिषि निषीदच ॥ ३ ॥

अथ चतुर्थी–

पवमानस्वर्विदोजायमानोभवोमहान् । इन्दोविश्वाँअभीदसि ॥ ४ ॥ १६ ॥

पवमान । स्वः । विदः । जायमानः । अभवः । महान् ।
इन्दो इति । विश्वान् । अभि । इत् । असि ॥ ४ ॥ १६ ॥

हे पवमान सोम त्वं स्वः सर्वं विदो यजमानाय प्रयच्छ । अपिच जायमानः प्रादुर्भवन्नेव महान् पूजनीयो भवोसि । किंच हे इन्दो सोम त्वं विश्वान् सर्वानेव शत्रून् अभ्यसि तेजसाभिभवसि ॥ ४ ॥

॥ इति सप्तमस्य प्रथमे षोडशोवर्गः ॥ १६ ॥

प्रगायत्रेणेति चतुर्ऋचं षट्त्रिंशं सूक्तं काश्यपस्यावत्सारस्यार्षं तृतीयापुरउष्णिक् आद्यद्वादशकोऽष्टकौ । शिष्टागायत्रः पवमानः सोमोदेवता । तथाचानुक्रान्तं—प्रगायत्रेणोपान्त्यापुरउष्णिगिति । उक्तोविनियोगः ।

तत्र प्रथमा—

प्रगायत्रेणगायतपवमानंविचर्षणिम् । इन्दुंसहस्रचक्षसम् ॥ १ ॥

प्र । गायत्रेण । गायत । पवमानम् । विऽचर्षणिम् ।
इन्दुम् । सहस्रऽचक्षसम् ॥ १ ॥

विचर्षणिं विद्रष्टारं सहस्रचक्षसं बहुदर्शनं पवमानं पूयमानमिन्दुं सोमं गायत्रेण गायत्रनामधेयेन साम्ना प्रगायत । हे स्तोतारो गानं कुरुत स्तुतेत्यर्थः ॥ १ ॥

अथ द्वितीया—

तंत्वासहस्रचक्षसमथोसहस्रभर्णसम् । अतिवारमपाविषुः ॥ २ ॥

तम् । त्वा । सहस्रऽचक्षसम् । अथो इति । सहस्रऽभर्णसम् ।
अति । वारम् । अपाविषुः ॥ २ ॥

हे सोम सहस्रचक्षसं बहुदर्शनं अथो अपिच सहस्रभर्णसं बहुभरणं तमभिषुतं त्वा त्वां वारं वालं दशापवित्रं अत्यपाविषुर्ऋत्विजः पावयन्ति ॥ २ ॥

अथ तृतीया—

अतिवारान्पवमानोअसिष्यदत्कलशाँअभिधावति ।
इन्द्रस्यहार्द्याविशन् ॥ ३ ॥

अर्ति । वारान् । पर्वमानः । असिस्यदत् । कलशान् ।
अभि । धावति । इन्द्रस्य । हार्दि । आऽविशन् ॥ ३॥

पवमानः पूयमानः सोमो वारान् अवेः वालानत्यतिक्रम्यासिष्यदत्स्यंदते । अपिचेन्द्रस्य हार्दि हृदयमाविशन् द्रोणानभिधावत्यभिगच्छति ॥ ३ ॥

अथ चतुर्थी-

इन्द्रस्यसोमराधसेशंपवस्वविचर्षणे । प्रजावद्रेतआभर ॥४॥ १७॥

इन्द्रस्य । सोम । राधसे । शम् । पवस्व । विऽचर्षणे ।
प्रजाऽवत् । रेतः । आ । भर ॥ ४ ॥ १७ ॥

हे विचर्षणे विद्रष्टः सोम त्वमिन्द्रस्य राधसे राधनाय संसिध्यै शं सुखकरं रसं पवस्व क्षर । अपिचास्मभ्यं प्रजावत्पुत्राद्युपेतं रेतउदकमन्नं वा आभराहर प्रयच्छेत्यर्थः ॥ ४ ॥

॥ इति सप्तमस्य प्रथमे सप्तदशोवर्गः ॥ १७ ॥

॥ इति नवमे मंडले द्वितीयोनुवाकः ॥ २ ॥

तृतीयेनुवाके सप्त सूक्तानि तत्रायावीतीति त्रिंशदृचं प्रथमं सूक्तमहीयुर्नामांगिरसऋषिः गायत्रीछन्दः पवमानःसोमो देवता । तथाचानुक्रान्तं--अयावीतीत्रिंशदमहीयुरिति । उक्तो विनियोगः ।

तत्र प्रथमा-

अयावीतीपरिस्रवयस्तइन्दोमदेष्वा । अवाहन्नवतीर्नव ॥ १ ॥

अया । वीती । परि । स्रव । यः । ते । इन्दो इति ।
मदेषु । आ । अवऽअहन् । नवतीः । नव ॥ १ ॥

हे इन्दो सोम अयानेन रसेन वीती वीत्यै इन्द्रस्य भक्षणाय परिस्रव परिक्षर । कीदृशेनरसेनेत्यतआह ते तव योरसोमदेषु संग्रामेषु नवतीर्नवेति नवनवतिसंख्याकाश्च शत्रुपुरीरवाहन् जघान अमुं सोमरसं पीत्वा मत्तःसन्निन्द्र उक्तलक्षणाः शत्रुपुरीर्जघानेतिकृत्वा रसोजघानेत्युपचारः ॥ १ ॥

अथ द्वितीया—

पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम् । अध त्यं तुर्वशं यदुम् ॥ २ ॥

पुरः । सद्यः । इत्थाऽधिये । दिवःऽदासाय । शम्बरम् ।
अध । त्यम् । तुर्वशम् । यदुम् ॥ २ ॥

सद्य एकस्मिन्नेवाह्नि पुरः शत्रूणां पुराणि सोमरसोवाहन् इत्थाधिये सत्यकर्मणे दिवोदासाय राज्ञे शंबरं शत्रुपुराणां स्वामिनमधाथ त्यं तं तुर्वशं तुर्वशनामकंराजानं दिवोदासशत्रुं यदुं यदुनामकंराजानं च वशमानयच्च । अत्रापि सोमरसं पीत्वा मत्तःसन् इंद्रः सर्वमेतदकार्षीदिति सोमरसेकर्तृत्वमुपचर्यते ॥ २ ॥

अथ तृतीया—

परि णो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् । क्षरा सहस्रिणीरिषः ॥ ३ ॥

परि । नः । अश्वम् । अश्वऽवित् । गोऽमत् । इन्दो इति ।
हिरण्यऽवत् । क्षर । सहस्रिणीः । इषः ॥ ३ ॥

हे इन्दो सोम अश्ववित् अश्वस्य लंभकस्त्वं नोस्माकमश्वं गोमद्गोयुक्तं हिरण्यवद्धिरण्योपेतं धनंच परिक्षर । अपिच सहस्रिणीर्बहूनि इषोन्नानि क्षर ॥ ३ ॥

अथ चतुर्थी—

पवमानस्य ते वयं पवित्रमभ्युन्दतः । सखित्वमा वृणीमहे ॥ ४ ॥

पवमानस्य । ते । वयम् । पवित्रम् । अभिऽउन्दतः ।
सखिऽत्वम् । आ । वृणीमहे ॥ ४ ॥

हे सोम पवित्रमभ्युंदतः पवित्रमभिक्लेदयतः पवमानस्य क्षरतश्च ते तव सखित्वं सख्यं वयममहीयव आंगिरसा आवृणीमहे प्रार्थयामहे ॥ ४ ॥

अथ पञ्चमी—

ये ते पवित्रमूर्मयो अभिक्षरन्ति धारया । तेभिर्नः सोम मृळय ॥ ५ ॥ १८ ॥

ये । ते । पवित्रम् । ऊर्मयः । अभिऽक्षरन्ति । धारया ।
तेभिः । नः । सोम । मृळय ॥ ५ ॥ १८ ॥

हे सोम ये प्रसिद्धाः ते तव ऊर्मयस्तरंगाः पवित्रं धारयाभिक्षरन्ति तेभिस्तैरूर्मिभिर्नोस्मान्मृळय सुखय ॥ ५ ॥

॥ इति सप्तमस्य प्रथमेष्टादशोवर्गः ॥ १८ ॥

अथ षष्ठी—

सनःपुनानआभररयिंवीरवतीमिषम् । ईशानःसोमविश्वतः ॥ ६ ॥

सः । नः । पुनानः । आ । भर । रयिम् । वीरऽवतीम् ।
इषम् । ईशानः । सोम । विश्वतः ॥ ६ ॥

हे सोम विश्वतः सर्वस्य जगतईशानः ईश्वरः सोभिषुतः पुनानः पूयमानस्त्वं नोस्मभ्यं रयिं धनं वीरवतीं पुत्राद्युपेतमिषमन्नं चाभराहर ॥ ६ ॥

अथ सप्तमी—

एतमुत्यंदशक्षिपोमृजन्तिसिन्धुमातरम् । समादित्येभिरख्यत ॥७॥

एतम् । ऊँ इति । त्यम् । दश । क्षिपः । मृजन्ति ।
सिन्धुऽमातरम । सम् । आदित्येभिः । अख्यत ॥ ७ ॥

सिंधुमातरं यस्य सोमस्य सिन्धवोमातरोनद्योभवन्ति त्यं तमेतमिमं सोमं दशक्षिपो दशसंख्याकाःअंगुलयो मृजंति शोधयंति । अपिच सोयं सोमः आदित्येभिरादित्यैः समख्यत संगच्छते ॥ ७ ॥

अथाष्टमी—

समिन्द्रेणोतवायुनासुतएतिपवित्रआ । संसूर्यस्यरश्मिभिः ॥ ८ ॥

सम् । इन्द्रेण । उत । वायुना । सुतः । एति ।
पवित्रे । आ । सम् । सूर्यस्य । रश्मिऽभिः ॥ ८ ॥

सुतोभिषुतः सोमः पवित्रे इन्द्रेण समेति संगच्छति । उतापिच वायुना समेति सूर्यस्य रश्मिभिर्मयूखैरपि समेति ॥ ८ ॥

अथ नवमी—

सनोभगायवायवेपूष्णेपवस्वमधुमान् । चारुर्मित्रेवरुणेच ॥ ९ ॥

सः । नः । भगाय । वायवे । पूष्णे । पवस्व । मधुऽमान् ।
चारुः । मित्रे । वरुणे । च ॥ ९ ॥

हे सोम मधुमान् मधुररसश्चारुः कल्याणस्वरूपश्च सोभिषुतस्त्वं नोस्माकं यज्ञे भगाय भगाख्यायदेवाय वायवेच पूष्णे रवये मित्रे मित्राय देवाय वरुणे वरुणायच पवस्व क्षर ॥९॥

अथ दशमी—

उच्चातेजातमन्धसोदिविषद्भूम्यादवे । उग्रंशर्ममहिश्रवः ॥१०॥१९॥

उच्चा । ते । जातम् । अन्धसः । दिवि । सत् । भूमिः । आ । ददे ।
उग्रम् । शर्म । महि । श्रवः ॥ १० ॥ १९ ॥

हे सोम ते तव संबन्धिनोंधसो रसस्योच्चा उपरि जातं जन्म अपिच दिवि द्युलोके सत् विद्यमानं स्वतंस्तवसंबन्धि उग्रमुद्गूर्णं शर्मसुखं महिमहत् श्रवोन्नंच भूमिराददे । भूम्याददइति पदत्रयमामनन्ति विसर्जनीयलोपः सांहितिकः । भूमिः भौमाजनामादृशाः भूमिष्ठैरादीयत इत्यर्थः ॥ १० ॥

॥ इति सप्तमस्य प्रथमे एकोनविंशोवर्गः ॥ १९ ॥

अथैकादशी—

एनाविश्वान्यर्यआद्युम्नानिमानुषाणाम् । सिषासन्तोवनामहे ॥११॥

एना । विश्वानि । अर्यः । आ । द्युम्नानि । मानुषाणाम् ।
सिसासन्तः । वनामहे ॥ ११ ॥

एना एनेनानेन सोमेन मानुषाणां मनुष्याणां विश्वा विश्वानि द्युम्नान्यन्नानि अर्योभिगच्छन्तः सिषासन्तः संभक्तुमिच्छन्तश्च वयं वनामहे संभजामहे ॥ ११ ॥

अथ द्वादशी–

स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः। वरिवोवित्परि स्रव ॥ १२ ॥

सः। नः। इन्द्राय। यज्यवे। वरुणाय। मरुत्ऽभ्यः।
वरिवःऽवित्। परि। स्रव ॥ १२ ॥

हेसोम वरिवोविदन्नस्य लंभकः पवमानस्त्वं नोस्माकं यज्यवे यष्टव्यायेन्द्राय वरुणायच मरुद्भ्यश्च परिस्रव धारया क्षर ॥ १२ ॥

अथ त्रयोदशी–

उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम्। इन्दुं देवा अयासिषुः ॥ १३ ॥

उपो इति। सु। जातम्। अप्ऽतुरम्। गोभिः। भंगम्।
परिऽकृतम्। इन्दुम्। देवाः। अयासिषुः ॥ १३ ॥

सुजातं सम्यक् प्रादुर्भूतं अप्तुरं वसतीवरीभिः प्रेरितं भगं शत्रूणां भंजकं गोभिर्गोविकारैः पयोभिः परिष्कृतमलंकृतं संस्कृतमिदं सोमं देवाइन्द्रादयः उपायासिषुरुपागच्छन्ति ॥ १३ ॥

अथ चतुर्दशी–

तमिद्वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव। य इन्द्रस्य हृदंसनिः ॥ १४ ॥

तम्। इत्। वर्धन्तु। नः। गिरः। वत्सम्। संशिश्वरीःऽइव।
यः। इन्द्रस्य। हृदम्ऽसनिः ॥ १४ ॥

यः सोम इन्द्रस्य हृदंसनिर्हृदयस्य संभक्ता भवति तमित्तमेव सोमं नोस्माकं गिरः स्तुतिरूपावाचः संवर्धन्तु सम्यक्वर्धयन्तु। तत्रदृष्टान्तः–वत्सं बालं शिश्वरीरिव यथा शिश्वर्योबद्धपयस्कामातरो वत्सं वर्धयन्ति तद्वदित्यर्थः ॥ १४ ॥

अथ पञ्चदशी–

अर्षा णः सोम शं गवे धुक्षस्व पिप्युषीमिषम्। वर्धा समुद्रमुक्थ्यम् ॥ १५ ॥ २० ॥

अर्ष । नः । सोम । शम् । गवे । धुक्षस्व । पिप्युषीम् । इषम् ।
वर्ध । समुद्रम् । उक्थ्यम् ॥ १५ ॥ २० ॥

हे सोम त्वं नोस्माकं गवे शं सुखमर्ष क्षर । अपिच पिप्युषीं प्रवृद्धामिषमन्नं धुक्षस्व पूरय । किंचोक्थ्यं प्रशंस्यं समुद्रमुदकं वर्ध वर्धय ॥ १५ ॥

॥ इति सप्तमस्य प्रथमे विंशोवर्गः ॥ २० ॥

अथ षोडशी—

पवमानोअजीजनद्दिवश्चित्रंनतन्यतुम् । ज्योतिर्वैश्वानरंबृहत् ॥ १६ ॥

पवमानः । अजीजनत् । दिवः । चित्रम् । न । तन्यतुम् ।
ज्योतिः । वैश्वानरम् । बृहत् ॥ १६ ॥

पवमानः सोमः बृहन्महत् वैश्वानरं वैश्वानराख्यं ज्योतिस्तेजो दिवो द्युलोकस्य चित्रं तन्यतुं न अशनिमिवाजीजनदजनयत् ॥ १६ ॥

अथ सप्तदशी—

पवमानस्यतेरसोमदोराजन्नदुच्छुनः । विवारमव्यमर्षति ॥ १७ ॥

पवमानस्य । ते । रसः । मदः । राजन् । अदुच्छुनः । वि ।
वारम् । अव्यम् । अर्षति ॥ १७ ॥

हे राजन् दीप्यमानसोम पवमानस्य क्षरतः ते तवादुच्छुनोरक्षोवर्जितो मदो मदकरो रसः अव्यमविमयं वारं वालं दशापवित्रं व्यर्षत्यभिगच्छति ॥ १७ ॥

अथाष्टादशी—

पवमानरसस्तवदक्षोविराजतिद्युमान् । ज्योतिर्विश्वंस्वर्दृशे ॥ १८ ॥

पवमान । रसः । तव । दक्षः । वि । राजति । द्युऽमान् ।
ज्योतिः । विश्वम् । स्वः । दृशे ॥ १८ ॥

हे पवमान सोम तव त्वदीयोदक्षो वृद्धोद्युमान् दीप्तिमान् रसो विराजति प्रकाशते । न केवलं स्वयमेव प्रकाशते किंतु विश्वं व्याप्तं स्वः सर्वं ज्योतिस्तेजश्च दृशे द्रष्टुं करोतीति शेषः॥१८॥

अथैकोनविंशी—

यस्तेमदोवरेण्यस्तेनापवस्वान्धसा । देवावीरघशंसहा ॥ १९ ॥

यः । ते । मदः । वरेण्यः । तेन । पवस्व । अन्धसा ।
देवऽअवीः । अघशंसऽहा ॥ १९ ॥

हे सोम ते तव देवावीर्देवकामोघशंसहा राक्षसानां हन्ता वरेण्यः सर्वैर्वरणीयो मदोमदकरो योरसोविद्यते तेन रसेनांधसादनीयेन पवस्व क्षर ॥ १९ ॥

अथ विंशी—

जघ्निर्वृत्रममित्रियंसस्निर्वाजंदिवेदिवे । गोषाउअश्वसाअसि ॥२०॥२१॥

जघ्निः । वृत्रम् । अमित्रियम् । सस्निः । वाजम् । दिवेऽदिवे ।
गोऽसाः । ॐ इति । अश्वऽसाः । असि ॥ २० ॥ २१ ॥

हे सोम त्वममित्रियममित्रभवं वृत्रं शत्रुं जघ्निर्हंतासि भवसि । किंच दिवेदिवे प्रतिदिनं वाजं संग्रामं सस्निः संभक्तासि । किंच गोषाः गवां दातासि अश्वसाः अश्वानां दातासि ॥ २० ॥

॥ इति सप्तमस्य प्रथमे एकविंशोवर्गः ॥ २१ ॥

अथैकविंशी—

संमिश्लोअरुषोभवसूपस्थाभिर्नधेनुभिः । सीदञ्छ्येनोनयोनिमा॥२१॥

सम्ऽमिश्लः । अरुषः । भव । सुऽउपस्थाभिः । न ।
धेनुऽभिः । सीदन् । श्येनः । न । योनिम् । आ ॥ २१ ॥

हे सोम त्वं सूपस्थाभिः शोभनोपस्थानाभिः धेनुभिर्गोभिः गोविकारैः पयोभिरित्यर्थः । संमिश्लः संमिश्रितः श्येनोन यथा श्येनः शीघ्रमागत्य स्थानमासीदति तद्वद्योनिं स्वकीयं स्थानं आसीदन । न संप्रत्यर्थे । इदानीमरुष आरोचमानोभव ॥ २१ ॥

अथ द्वाविंशी—

सपवस्वयआविथेन्द्रंवृत्रायहन्तवे । वव्रिवांसंमहीरपः ॥ २२ ॥

सः । पवस्व । यः । आविथ । इन्द्रम् । वृत्राय ।
हन्तवे । वव्रिऽवांसम् । महीः । अपः ॥ २२ ॥

हे सोम यस्त्वं महीर्महतीरपो महांत्युदकानि वव्रिवांसं निरुंधानं वृत्राय वृत्रं हन्तवे हन्तुं इन्द्रमाविथ रक्ष । सत्वं पवस्व धारया क्षर । सोमं पीत्वा मत्तः सन्निन्द्रो महांत्युदकानि निरुंधानं वृत्रं जघानेत्यर्थः ॥ २२ ॥

अथ त्रयोविंशी—

सुवीरासोवयंधनाजयेमसोममीढ्वः । पुनानोवर्धनोगिरः ॥ २३ ॥

सुऽवीरासः । वयम् । धना । जयेम । सोम । मीढ्वः ।
पुनानः । वर्ध । नः । गिरः ॥ २३ ॥

हे मीढ्वः सेक्तः सोम पुनानः पूयमानस्त्वं सुवीरासः सुवीराः कल्याणपुत्राः वयममहीयव आंगिरसाः धना शत्रूणां धनानि जयेम शत्रून जित्वा तदीयानि धनानि स्वीकुर्यामेत्यर्थः । नोस्माकं गिरः स्तुतिरूपावाचश्च वर्ध वर्धय ॥ २३ ॥

अथ चतुर्विंशी—

त्वोतासस्तवावसास्यामवन्वन्तआमुरः । सोमव्रतेषुजागृहि ॥ २४ ॥

त्वाऽऊतासः । तव । अवसा । स्याम । वन्वन्तः । आऽमुरः ।
सोम । व्रतेषु । जागृहि ॥ २४ ॥

हे सोम तव त्वदीयेनावसा रक्षणेन त्वोतासः त्वया रक्षिताः सन्तो वन्वन्तः शत्रून् भजमाना आसुरस्तेषामभिमारकाः स्याम भवेम । व्रतेष्वस्माकं कर्मसु जागृहि प्रबुद्धो भव ॥ २४ ॥

अथ पञ्चविंशी—

**अपघ्नन्पवतेमृधोपसोमोअराव्णः । गच्छन्निन्द्रस्यनिष्कृतम् ॥२५॥२२॥**

अपऽघ्नन् । पवते । मृधः । अप । सोमः । अराव्णः ।
गच्छन् । इन्द्रस्य । निःऽकृतम् ॥ २५ ॥ २२ ॥

सोमो मृधो हिंसकान् शत्रूनपघ्नन् मारयन् अराव्णः शत्रौ सत्यां धनानामदातॄंश्चापघ्नन् इन्द्रस्य निष्कृतं स्थानं गच्छन् प्राप्नुवन् पवते धारया क्षरति ॥ २५ ॥

॥ इति सप्तमस्य प्रथमे द्वाविंशो वर्गः ॥ २२ ॥

अथ षड्विंशी—

**महोनोरायआभरपवमानजहीमृधः । रास्वेन्दोवीरवद्यशः ॥ २६ ॥**

महः । नः । रायः । आ । भर । पवमान । जहि । मृधः ।
रास्व । इन्दो इति । वीरऽवत् । यशः ॥ २६ ॥

हे पवमानेन्दो सोम नोऽस्माकं महो महान्ति रायो धनान्याभराहर । मृधो हिंसकान् शत्रूंश्च जहि मारय । वीरवत् पुत्राद्युपेतं यशः कीर्तिं च रास्वास्मभ्यं देहि ॥२६॥

अथ सप्तविंशी—

**नत्वाशतंचनह्रुतोराधोदित्सन्तमामिनन् । यत्पुनानोमखस्यसे ॥२७॥**

न । त्वा । शतम् । चन । ह्रुतः । राधः । दित्सन्तम् । आ । मिनन् ।
यत् । पुनानः । मखस्यसे ॥ २७ ॥

हे सोम राधो धनमादित्सन्तमादातुमिच्छन्तं त्वा त्वां शतं चन बहवोऽपि ह्रुतो हिंसकाः शत्रवो नामिनन्नहिंसन्ति । कदेत्यत्राह यद्यदा पुनानः पूयमानस्त्वं मखस्यसेऽस्मभ्यं धनं दातुमिच्छसि ॥ २७ ॥

अथाष्टाविंशी–

पवस्वेन्दोवृषासुतःकृधीनोयशसोजने । विश्वाअपद्विषोजहि ॥२८॥

पवस्व । इन्दो इति । वृषा । सुतः । कृधि । नः । यशसः ।
जने । विश्वाः । अप । द्विषः । जहि ॥ २८ ॥

हे इन्दो सोम सुतोभिषुतो वृषा सेक्ता त्वं पवस्व धारया क्षर । जने जनपदेषु नोस्मान् यशसोयशस्विनः कृधि कुरु । विश्वाः सर्वान् द्विषोद्वेष्टॄन् शत्रून् अपजहि मारय च ॥२८॥

अथैकोनत्रिंशी–

अस्यतेसख्येवयंतवेन्दोद्युम्नउत्तमे । सासह्यामपृतन्यतः ॥ २९ ॥

अस्य । ते । सख्ये । वयम् । तव । इन्दो इति ।
द्युम्ने । उत्ऽतमे । ससह्याम । पृतन्यतः ॥ २९ ॥

हे इन्दो सोम अस्यास्मिन् यागे वर्तमानस्य ते तव सख्ये सखित्वे सति वयममहीयव आंगिरसास्तव त्वदीये उत्तमे श्रेष्ठे द्युम्नेन्ने तृप्तिं प्राप्ताः । तथाचयास्कः–द्युम्नंद्योततेर्यशोवान्नंवेति[1] । पृतन्यतोयुद्धमिच्छतः शत्रून्ससह्यामाभिभवेम ॥ २९ ॥

अथ त्रिंशी–

यातेभीमान्यायुधातिग्मानिसन्तिधूर्वणे । रक्षासमस्यनोनिदः॥३०॥२३॥

या । ते । भीमानि । आयुधा । तिग्मानि । सन्ति ।
धूर्वणे । रक्ष । समस्य । नः । निदः ॥ ३० ॥ २३ ॥

हे सोम ते तव या यानि भीमानि शत्रूणां भयंकराणि तिग्मानि तीक्ष्णानि आयुधा आयुधानि धूर्वणे शत्रुवधार्थं सन्ति तैरायुधैः समस्य सर्वस्य शत्रोर्निदोनिन्दाया नोस्मान् रक्ष पालय ॥ ३० ॥

॥ इति सप्तमस्य प्रथमे त्रयोविंशोवर्गः ॥ २३ ॥

---

१ नि० ५. ५.

एतेअसृग्रमिति त्रिंशदृचं द्वितीयं सूक्तं भार्गवस्य जमदग्नेरार्षं गायत्रं पवमानसोमदेवताकं। तथाचानुक्रान्तं—एतेअसृग्रंजमदग्निरिति । गतोविनियोगः ।

तत्र प्रथमा—

एतेअसृग्रमिन्दवस्तिरःपवित्रमाशवः । विश्वान्यभिसौभगा ॥ १॥

एते । असृग्रम् । इन्दवः । तिरः । पवित्रम् । आशवः ।
विश्वानि । अभि । सौभगा ॥ १ ॥

आशवः शीघ्रा एते पवमानाइन्दवः सोमा विश्वानि सर्वाणि सौभगा सौभगानि धनान्यभिलक्ष्य पवित्रं तिरः असृग्रं ऋत्विग्भिः सृज्यन्ते ॥ १ ॥

अथ द्वितीया—

विघ्नन्तोदुरितापुरुसुगातोकायवाजिनः । तनाकृण्वन्तोअर्वते ॥२॥

विऽघ्नन्तः । दुःऽइता । पुरु । सुऽगा । तोकाय । वाजिनः ।
तना । कृण्वन्तः । अर्वते ॥ २ ॥

वाजिनो बलवन्तः सोमाः पुरु बहूनि दुरिता दुरितानि विघ्नन्तो विशेषेण नाशयन्तः तोकायास्माकं पुत्रायार्वतेश्वाय च सुगा सुखानि तना धनानि च कृण्वन्तः कुर्वन्तः तिरः पवित्रं सृज्यन्त इति संबन्धः ॥ २ ॥

अथ तृतीया—

कृण्वन्तोवरिवोगवेभ्यर्षन्तिसुष्टुतिम् । इळामस्मभ्यंसंयतम् ॥३॥

कृण्वन्तः । वरिवः । गवे । अभि । अर्षन्ति । सुऽस्तुतिम् ।
इळाम् । अस्मभ्यम् । सम्ऽयतम् ॥ ३ ॥

अस्माकं गवेस्मभ्यंच संयतं यदास्मान् संयच्छति तद्वरिवोधनमिळामन्नं च कृण्वन्तः कुर्वंतः सोमाः सुष्टुतिमस्मदीयां शोभनां स्तुतिमभ्यर्षंत्याभिमुख्येन गच्छन्ति ॥ ३ ॥

अथ चतुर्थी—

असाव्यंशुर्मदायाप्सुदक्षोगिरिष्ठाः । श्येनोनयोनिमासदत् ॥ ४ ॥

असावि । अंशुः । मदाय । अप्ऽसु । दक्षः । गिरिऽस्थाः ।
श्येनः । न । योनिम् । आ । असदत् ॥ ४ ॥

गिरिष्ठाः पर्वतेजातोंशुः सोमोमदाय मदार्थमसाव्यभिषुतः अप्सु वसतीवरीषु दक्षः प्रवृद्धश्च भवति । किंच श्येनोन यथा श्येनोवेगेन आगत्य स्थानमासीदति तद्वदयं सोमो योनिं स्वकीयं स्थानमसददासीदति ॥ ४ ॥

अथ पञ्चमी–

शुभ्रमन्धोदेववातमप्सुधूतोनृभिःसुतः । स्वदन्तिगावःपयोभिः॥५॥२४॥

शुभ्रम् । अन्धः । देवऽवातम् । अप्ऽसु । धूतः । नृऽभिः ।
सुतः । स्वदन्ति । गावः । पयःऽभिः ॥ ५ ॥ २४ ॥

यद्देववातं देवैःप्रार्थितं शुभ्रं शोभनमन्धोन्नं गावः पशवः पयोभिराशिरैः स्वदन्ति स्वादयन्ति सोयं सोमो नृभिर्नेतृभिर्ऋत्विग्भिः सुतोभिषुतःसन्नप्सु वसतीवरीषु धूतः शोधितोभवति॥५॥

॥ इति सप्तमस्य प्रथमे चतुर्विंशोवर्गः ॥ २४ ॥

अथ षष्ठी–

आदीमश्वंनहेतारोशूशुभन्नमृताय । मध्वोरसंसधमादे ॥ ६ ॥

आत् । ईम् । अश्वम् । न । हेतारः । अशूशुभन् । अमृताय ।
मध्वः । रसम् । सधऽमादे ॥ ६ ॥

आदनन्तरं हेतारः प्रेरकाऋत्विजः सधमादे यज्ञे ईमेनं मध्वोमदकरस्य सोमस्य रसं अमृतायामरणायाश्वं नाश्वमिवाशूशुभन् शोभयन्ति ॥ ६ ॥

अथ सप्तमी–

यास्तेधारामधुश्चुतोसृग्रमिन्दऊतये । ताभिःपवित्रमासदः ॥ ७ ॥

याः । ते । धाराः । मधुऽश्चुतः । असृग्रम् । इन्दो इति ।
ऊतये । ताभिः । पवित्रम् । आ । असदः ॥ ७ ॥

हे इन्दो सोम ते तव मधुश्चुतो मधुररसस्य श्चोतयित्र्योयाधारा ऊतये रक्षणाय असृग्न-मसृज्यन्त ताभिर्धाराभिस्त्वं पवित्रमासदआसीद् ॥ ७ ॥

अथाष्टमी–

सोअर्षेन्द्रायपीतयेतिरोरोमाण्यव्यया । सीदन्योनावनेष्वा ॥ ८ ॥

सः । अर्ष । इन्द्राय । पीतये । तिरः । रोमाणि । अव्यया ।
सीदन् । योना । वनेषु । आ ॥ ८ ॥

हे सोम सोभिषुतस्त्वं अव्यया अव्ययानि अविमयानि रोमाणि वालानि तिरस्तिरस्कुर्वन् वनेषु पात्रेषु योनां योनौ स्थाने आसीदन्निन्द्रायेन्द्रस्य पीतये पानायार्ष क्षर ॥ ८ ॥

अथ नवमी–

त्वमिन्दोपरिस्रवस्वादिष्ठोअङ्गिरोभ्यः । वरिवोविद्घृतंपयः ॥ ९ ॥

त्वम् । इन्दो इति । परि । स्रव । स्वादिष्ठः ।
अङ्गिरःऽभ्यः । वरिवःऽवित् । घृतम् । पयः ॥ ९ ॥

हे इन्दो सोम स्वादिष्ठः स्वादुतमो वरिवोविदस्मदभिलषितस्य धनस्य लंभकश्च त्वमंगिरोभ्योंगिरसामर्थाय घृतमाज्यं पयश्च परिस्रव परिक्षर ॥ ९ ॥

अथ दशमी–

अयंविचर्षणिर्हितःपवमानःसचेतति । हिन्वानआप्यंबृहत् ॥ १० ॥ २५ ॥

अयम् । विऽचर्षणिः । हितः । पवमानः । सः । चेतति ।
हिन्वानः । आप्यम् । बृहत् ॥ १० ॥ २५ ॥

विचर्षणिर्विद्रष्टा हितः पात्रेषु निहितः पवमानः अयं सोम आप्यमप्सुभवं बृहन्महदन्नं हिन्वानः प्रेरयन् सचेतति सर्वैः सज्ञायते ॥ १० ॥

॥ इति सप्तमस्य प्रथमे पञ्चविंशोवर्गः ॥ २५ ॥

अथैकादशी—

एषवृषावृषव्रतःपवमानोअशस्तिहा। करद्वसूनिदाशुषे ॥ ११ ॥

एषः। वृषा। वृषऽव्रतः। पवमानः। अशस्तिऽहा।
करत्। वसूनि। दाशुषे ॥ ११ ॥

वृषा कामानां सेक्ता वृषव्रतो वृषकर्मा अशस्तिहा राक्षसानां हन्ता पवमान एषसोमो दाशुषे हविषां दात्रे यजमानाय वसूनि धनानि करत् करोति प्रयच्छतीत्यर्थः॥ ११॥

अथ द्वादशी—

आपवस्वसहस्रिणंरयिंगोमन्तमश्विनम्। पुरुश्चन्द्रंपुरुस्पृहम्॥१२॥

आ। पवस्व। सहस्रिणम्। रयिम्। गोऽमन्तम्।
अश्विनम्। पुरुऽचन्द्रम्। पुरुऽस्पृहम् ॥ १२ ॥

हे सोम त्वं सहस्रिणं बहुसंख्याकं गोमन्तं गोभिरुपेतमश्विनमश्ववन्तं पुरुश्चन्द्रं बहूनां हर्षकं पुरुस्पृहं बहुस्पृहणीयं रयिं धनमापवस्व परिक्षर ॥१२ ॥

अथ त्रयोदशी—

एषस्यपरिषिच्यतेमर्मृज्यमानआयुभिः। उरुगायःकविक्रतुः ॥१३॥

एषः। स्यः। परि। सिच्यते। मर्मृज्यमानः। आयुऽभिः।
उरुऽगायः। कविऽक्रतुः ॥ १३ ॥

उरुगायो बहुस्तुतिः कविक्रतुः क्रांतप्रज्ञः क्रान्तकर्मा वा स्यः सएषोयं सोम आयुभिर्मनुष्यैर्मर्मृज्यमानः शोध्यमानः परिषिच्यते ॥ १३ ॥

अथ चतुर्दशी—

सहस्रोतिःशतामघोविमानोरजसःकविः। इन्द्रायपवतेमदः॥१४॥

सहस्रऽऊतिः। शतऽमघः। विऽमानः। रजसः। कविः।
इन्द्राय। पवते। मदः ॥ १४ ॥

सहस्रोतिरपरिमितरक्षणः शतमघो बहुधनो रजसो लोकस्य विमानो निर्माता कविः क्रान्तकर्मा मदो मदकरः सोमइन्द्रायेन्द्रार्थं पवते धारया क्षरति ॥१४॥

अथ पंचदशी—

गिराजातइहस्तुतइन्दुरिन्द्रायधीयते। विर्योनावसताविव॥१५॥२६॥

गिरा। आतः। इह। स्तुतः। इन्दुः। इन्द्राय। धीयते।
विः। योनौ। वसतौऽइव॥ १५॥ २६॥

जातः प्रादुर्भूतः गिरा स्तुत्या स्तुतश्चेन्दुः सोम इहास्मिन्यज्ञे योना योनौ स्वस्थाने इन्द्रायेन्द्रार्थं वसताविव विःपक्षी यथा स्ववासे तथा धीयते निधीयते ॥१५॥

॥ इति सप्तमस्य प्रथमे षड्विंशोवर्गः ॥२६॥

अथ षोडशी—

पवमानःसुतोनृभिःसोमोवाजमिवासरत्। चमूषुशक्मनासदम्॥१६॥

पवमानः। सुतः। नृऽभिः। सोमः। वाजम्ऽइव। असरत्।
चमूषु। शक्मना। आऽसदम्॥ १६॥

नृभिर्नेतृभिर्ऋत्विग्भिः सुतोभिषुतः पवमानः सोमश्च चमूषु चमसेषु शक्मना बलेनासंदमुपवेष्टुं वाजमिव युद्धमिव स्थानमसरत्सरति ॥ १६ ॥

अथ सप्तदशी—

तंत्रिपृष्ठेत्रिवन्धुरेरथेयुञ्जन्तियातवे। ऋषीणांसप्तधीतिभिः॥१७॥

तम्। त्रिऽपृष्ठे। त्रिऽवन्धुरे। रथे। युञ्जन्ति। यातवे।
ऋषीणाम्। सप्त। धीतिऽभिः॥ १७॥

त्रिपृष्ठे त्रिषवणपृष्ठे त्रिवंधुरे त्रिवेदवंधुरे ऋषीणांरथे यज्ञरथे तं सोमं सप्त सप्तभिः धीतिभिश्छंदोभिः यातवे देवान्प्रतिगन्तुं युंजन्ति ऋत्विजोयोजयन्ति ॥ १७ ॥

अथाष्टादशी–

तंसोतारोधनस्पृतमाशुंवाजांययातवे । हरिंहिनोतवाजिनम्॥१८॥

तम् । सोतारः । धनऽस्पृतम् । आशुम् । वाजाय ।
यातवे । हरिम् । हिनोत । वाजिनम् ॥ १८ ॥

हे सोतारोभिषवकर्तार ऋत्विजः धनस्पृतं धनानां स्प्रष्टारं वाजिनं बलिनं आशुं वेगवंतं सोमात्मकं हरिमश्वं वाजाय यज्ञाख्यं संग्रामं यातवे गंतुं हिनोत प्रेष्यत । यथा योद्धारोयुद्धं गंतुं बलिनं वेगवंतमश्वं प्रेरयन्ति तद्वत् यज्ञमभिगन्तुं बलवन्तं सोमं प्रेरयतेति भावः ॥ १८ ॥

अथैकोन विंशी–

आविशन्कलशंसुतोविश्वाअर्षन्नभिश्रियः । शूरोनगोषुतिष्ठति॥१९॥

आऽविशन् । कलशम् । सुतः । विश्वाः । अर्षन् ।
अभि । श्रियः । शूरः । न । गोषु । तिष्ठति ॥ १९ ॥

सुतोभिषुतः सोमः कलशं द्रोणमाविशन् विश्वाः सर्वाः श्रियः संपदोभ्यर्षन् अस्मानभिगमयन् गोषु शत्रूणां पशुषु शूरोन यथाशूरो निःशंकस्तिष्ठति तद्वद्यज्ञेषु निःशंकस्तिष्ठति ॥ १९ ॥

अथविंशी–

आतंइन्द्रोमदायकंपयोदुहन्त्यायवः । देवादेवेभ्योमधु॥२०॥२७॥

आ । ते । इन्दो इति । मदाय । कम् । पयः । दुहन्ति ।
आयवः । देवाः । देवेभ्यः । मधु ॥ २० ॥ २७ ॥

हे इन्दो सोम ते तव मधु मधुभूतं पयः पेयरसं देवाः स्तोतारः आयवोमनुष्या मदाय कं मदार्थं देवेभ्य इन्द्रादिभ्यः आदुहन्ति ॥ २० ॥

॥ इति सप्तमस्य प्रथमे सप्तविंशोवर्गः ॥ २७ ॥

अथैकविंशी—

आनःसोमंपवित्रआसृजतामधुमत्तमम् । देवेभ्योदेवश्रुत्तमम्॥२१॥

आ । नः । सोमम् । पवित्रे । आ । सृजत । मधुमत्ऽतमम् ।
देवेभ्यः । देवश्रुत्ऽतमम् ॥ २१ ॥

हे ऋत्विजो नोस्माकं देवश्रुत्तममत्यन्तं देवैः श्रूयमाणं मधुमत्तमं अतिशयेन मधुमन्तं सोमंदेवेभ्य इन्द्राद्यर्थं पवित्रे दशापवित्रे आसृजत साधयत ॥ २१ ॥

अथ द्वाविंशी—

एतेसोमाअसृक्षतगृणानाःश्रवसेमहे । मदिन्तमस्यधारया ॥२२॥

एते । सोमाः । असृक्षत । गृणानाः । श्रवसे । महे ।
मदिन्ऽतमस्य । धारया ॥ २२ ॥

गृणानाः स्तूयमाना एते इमे सोमा महे महते श्रवसे अन्नाय मदिन्तमस्य मादयितृतमस्य रसस्य धारया असृक्षत ऋत्विग्भिः सृज्यन्ते ॥ २२ ॥

अथ त्रयोविंशी—

अभिगव्यानिवीतयेनृम्णापुनानोअर्षसि । सनद्वाजःपरिस्रव ॥२३॥

अभि । गव्यानि । वीतये । नृम्णा । पुनानः ।
अर्षसि । सनत्ऽवाजः । परि । स्रव ॥ २३ ॥

हे सोम पुनानः पूयमानोस्त्वं वीतये भक्षणाय गव्यानि गोसंबन्धीनि नृम्णा नृम्णानि धनानि क्षीरादीन्यभ्यर्षस्यभिगच्छसि । सत्वं सनद्वाजोदीयमानान्नःसन् परिस्रव परिक्षर ॥२३॥

अथ चतुर्विंशी—

उतनोगोमतीरिषोविश्वाअर्षपरिष्टुभः । गृणानोजमदग्निना॥२४॥

उत । नः । गोऽमतीः । इषः । विश्वाः । अर्ष ।
परिऽस्तुभः । गृणानः । जमत्ऽअग्निना ॥ २४ ॥

उतापिच हे सोम जमदग्निनाम्ना ऋषिणा मया गृणानः स्तुयमानस्त्वं नोस्माकं गोमती-र्गोभिर्युक्तानि परिष्टुभः परितः श्रोतव्यानि विश्वाः सर्वाणि इषोन्नान्यर्ष गच्छ अस्मभ्यमेवं-विधान्यन्नानि देहीत्यर्थः ॥ २४ ॥

अथ पञ्चविंशी—

पवस्ववाचोअग्रियःसोमचित्राभिरूतिभिः ।
अभिविश्वानिकाव्या ॥ २५ ॥ २८ ॥

पवस्व । वाचः । अग्रियः । सोम । चित्राभिः ।
ऊतिऽभिः । अभि । विश्वानि । काव्या ॥ २५ ॥ २८ ॥

हे सोमाग्रियोमुख्यस्त्वं चित्राभिः पूजनीयैरूतिभीरक्षणैः सह वाचोस्मदीयाःस्तुतीः अ-भिपवस्व । एतदेव दर्शयति—विश्वानि सर्वाणि काव्या काव्यानि स्तुत्यात्मकानि वाक्यान्यभि पवस्वेति ॥ २५ ॥

॥ इति सप्तमस्य प्रथमेष्टाविंशोवर्गः ॥ २८ ॥

अथ षड्विंशी—

त्वंसमुद्रियाअपोग्रियोवाचईरयन् । पवस्वविश्वमेजय ॥ २६ ॥

त्वम् । समुद्रियाः । अपः । अग्रियः । वाचः ।
ईरयन् । पवस्व । विश्वम्ऽएजय ॥ २६ ॥

हे विश्वमेजय विश्वकंपक सोमाग्रियोमुख्यस्त्वं वाचईरयन् प्रेरयन् समुद्रियाआन्त-रिक्षाण्यपउदकानि पवस्व धारया क्षर ॥ २६ ॥

अथ सप्तविंशी—

तुभ्येमाभुवनाकवेमहिम्नेसोमतस्थिरे । तुभ्यमर्षन्तिसिन्धवः ॥ २७ ॥

तुभ्य । इमा । भुवना । कवे । महिम्ने । सोम ।
तस्थिरे । तुभ्यम् । अर्षन्ति । सिन्धवः ॥ २७ ॥

हे कवे क्रान्तकर्मन् सोम तुभ्य तुभ्यं तव महिम्ने इमा इमानि भुवना भुवनानि तस्थिरे तिष्ठन्ति त्वामेव पुरस्कुर्वन्तीत्यर्थः । अपिच सिंधवोनद्यस्तुभ्यमेवार्षंति गच्छन्ति त्वदाज्ञामेवानुपालयन्तीत्यर्थः ॥ २७ ॥

अथाष्टाविंशी—

प्रतेंदिवोनवृष्टयोधारायन्त्यसश्चतः । अभिशुक्रामुपस्तिरम्॥२८॥

प्र । ते । दिवः । न । वृष्टयः । धाराः । यन्ति । असश्चतः ।
अभि । शुक्राम् । उपऽस्तिरम् ॥ २८ ॥

हे सोम ते तव असश्चतोसंगाधारा दिवोन्तरिक्षाद्वृष्टयोन॰वर्षाणीव शुक्रां शुक्लवर्णां शुक्लवर्णैरविलोमनिर्मितमुपस्तिर मुपस्तीर्यमाणं पवित्रमभि प्रति प्रयन्ति ॥ २८ ॥

अथैकोनत्रिंशी—

इन्द्रायेन्दुंपुनीतनोग्रंदक्षायसाधनम् । ईशानंवीतिराधसम्॥२९॥

इन्द्राय । इन्दुम् । पुनीतन । उग्रम् । दक्षाय ।
साधनम् । ईशानम् । वीतिऽराधसम् ॥ २९ ॥

हे ऋत्विजः उग्रमुद्गूर्णं दक्षाय बलस्य साधनं करणं ईशानं धनानामीश्वरं वीतिराधसं दत्तधनं इन्दुं सोमं इन्द्रायेन्द्रार्थं पुनीतन पुनीत ॥ २९ ॥

अथ त्रिंशी—

पवमानऋतःकविःसोमःपवित्रमासदत् । दधत्स्तोत्रेसुवीर्यम्॥३०॥२९॥

पवमानः । ऋतः । कविः । सोमः । पवित्रम् । आ ।
असदत् । दधत् । स्तोत्रे । सुऽवीर्यम् ॥ ३० ॥ २९ ॥

ऋतः सत्यभूतः कविः क्रान्तकर्मा पवमानः सोमोस्मदीये स्तोत्रे सुवीर्यं शोभनवीर्यं दधत् प्रयच्छन् पवित्रमासददासीददिति ॥ ३० ॥

॥ इति सप्तमस्य प्रथमे एकोनत्रिंशोवर्गः ॥ २९ ॥

आपवस्वेति त्रिंशदृचं तृतीयं सूक्तं काश्यपस्य निध्रुवेरार्षं गायत्रं पवमानसोमदेवताकं। तथाचानुक्रान्तं—आपवस्वनिध्रुविः काश्यपइति। गतोविनियोगः।

तत्र प्रथमा—

आपवस्वसहस्रिणंरयिंसोमसुवीर्यम्। अस्मेश्रवांसिधारय॥ १॥

आ। पवस्व। सहस्रिणम्। रयिम्। सोम।
सुऽवीर्यम्। अस्मे इति। श्रवांसि। धारय॥ १॥

हे सोम त्वं सहस्रिणं बहुसंख्याकं सुवीर्यं शोभनवीर्यं रयिं धनमापवस्वाभिमुख्येन क्षर; अपिचास्मे अस्मासु श्रवांस्यन्नानि धारय स्थापय॥ १॥

अथ द्वितीया—

इषमूर्जंचपिन्वसइन्द्रायमत्सरिन्तमः। चमूष्वानिषीदसि॥ २॥

इषम्। ऊर्जम्। च। पिन्वसे। इन्द्राय।
मत्सरिन्ऽतमः। चमूषु। आ। नि। सीदसि॥ २॥

हे सोम मत्सरिन्तमः अतिशयेन मदयितृतमः त्वमिन्द्रायेन्द्रार्थमिषमन्नमूर्जं रसंच पिन्वसे क्षरसि। अपिच चमूषु चमसेष्वानिषीदसि तिष्ठसि॥ २॥

अथ तृतीया—

सुतइन्द्रायविष्णवेसोमःकलशेअक्षरत्। मधुमाँअस्तुवायवे॥ ३॥

सुतः। इन्द्राय। विष्णवे। सोमः। कलशे।
अक्षरत्। मधुऽमान्। अस्तु। वायवे॥ ३॥

इन्द्रायेन्द्रार्थं विष्णवे विष्णवर्थंच वायवे वाय्वर्थंच सुतोभिषुतोयः सोमः कलशे द्रोणकलशे अक्षरत् क्षरति सोयं सोमो मधुमान् मधुररसवानस्तु भवतु॥ ३॥

अथ चतुर्थी—

एतेअसृग्रमाशवोतिह्वरांसिबभ्रवः। सोमाऋतस्यधारया॥ ४॥

एते । असृग्रम् । आशवः । अति । ह्वरांसि ।
बभ्रवः । सोमाः । ऋतस्य । धारया ॥ ४ ॥

बभ्रवो बभ्रुवर्णा आशवः शीघ्रा एते इमे सोमा ऋतस्योदकस्य धारया असृग्रन् सृज्यन्ते ह्वरांसि रक्षांस्यति गच्छन्तिच ॥ ४ ॥

अथ पंचमी–

इन्द्रंवर्धन्तोअप्तुरःकृण्वन्तोविश्वमार्यम् । अपघ्नन्तोअराव्णः॥५॥३०॥

इन्द्रम् । वर्धन्तः । अप्ऽतुरः । कृण्वन्तः ।
विश्वम् । आर्यम् । अपऽघ्नन्तः । अराव्णः ॥ ५ ॥ ३० ॥

इन्द्रंवर्धन्तो वर्धयन्तोप्तुर उदकस्य प्रेरका विश्वं सोमं अस्मदीयकर्मार्थं आर्यं भद्रं कृण्वतः कुर्वन्तोराव्णो दातॄनपघ्नन्तोविनाशयन्तः अभ्यर्षन्तीति उत्तरया संबन्धः ॥ ५ ॥

॥ इति सप्तमस्य प्रथमे त्रिंशोवर्गः ॥ ३० ॥

अथ षष्ठी–

सुताअनुस्वमारजोभ्यर्षन्तिबभ्रवः । इन्द्रंगच्छन्तइन्दवः ॥ ६ ॥

सुताः । अनु । स्वम् । आ । रजः । अभि । अर्षन्ति ।
बभ्रवः । इन्द्रम् । गच्छन्तः । इन्दवः ॥ ६ ॥

बभ्रवो बभ्रुवर्णाः सुताअभिषुता इन्दवः सोमाः इन्द्रमागच्छन्तः आभिमुख्येन प्राप्नुवन्तः स्वं स्वकीयं रजः स्थानमनु प्रति अभ्यर्षन्ति अभिगच्छन्ति ॥ ६ ॥

अथ सप्तमी–

अयापवस्वधारयाययासूर्यमरोचयः । हिन्वानोमानुषीरपः ॥ ७ ॥

अया । पवस्व । धारया । यया । सूर्यम् । अरोचयः ।
हिन्वानः । मानुषीः । अपः ॥ ७ ॥

हे सोम मानुषीर्मनुष्याणां हितान्यप उदकानि हिन्वानः प्रेरयन् त्वं यया धारया सूर्यमरोचयः प्रकाशयस्तया अया अनया धारया पवस्व क्षर ॥ ७ ॥

अथाष्टमी—

अयुक्तसूरएतशंपवमानोमनावधि । अन्तरिक्षेणयातवे ॥ ८ ॥

अयुक्त । सूरः । एतशम् पवमानः । मनौ ।
अधि । अन्तरिक्षेण । यातवे ॥ ८ ॥

पवमानः पूयमानः सोमो मनावधि मनुर्मनुष्यः तस्मिन्मनुष्ये इत्यर्थः अन्तरिक्षेण यातवे गन्तुं सूरः प्रेरकस्य सूर्यस्यैतशमश्वं । एतग्वा एतश इत्यश्वनामसुपाठात् । अयुक्त युंक्ते ॥८॥

अथ नवमी—

उतत्याहरितोदशसूरोअयुक्तयातवे । इन्दुरिन्द्रइतिब्रुवन् ॥ ९ ॥

उत । त्याः । हरितः । दश । सूरः । अयुक्त ।
यातवे । इन्दुः । इन्द्रः । इति । ब्रुवन् ॥ ९॥

उतापिचेन्दुः सोमः इन्द्रइति ब्रुवन् त्या ता दश दशसंख्याका हरितो दिशः प्रति यातवे गन्तुं सूरः सूर्यस्यैतशमयुक्त युनक्ति ॥ ९ ॥

अथ दशमी—

परीतोवायवेसुतंगिरइन्द्रायमत्सरम् । अव्योवारेषुसिञ्चत ॥१०॥३१॥

परि । इतः । वायवे । सुतम् । गिरः । इन्द्राय ।
मत्सरम् । अव्यः । वारेषु । सिञ्चत ॥ १० ॥ ३१ ॥

हे गिरः स्तोतारोयूयं वायवे वाय्वर्थं इन्द्रायेन्द्रार्थंच सुतमभिषुतं मत्सरं मदकरं सोममितोभिषवदेशादुद्धृत्य अव्यः अवेर्वारेषु वालेषु परिषिंचत ॥१०॥

॥ इति सप्तमस्य प्रथमे एकत्रिंशोवर्गः ॥३१॥

अथैकादशी—

पवमानविदारयिमस्मभ्यंसोमदुष्टरंम् । योदूणाशोवनुष्यता॥११॥

पवमान । विदाः । रयिम् । अस्मभ्यंम् । सोम ।
दुस्तरंम् । यः । दुःऽनशः । वनुष्यता ॥ ११ ॥

हे पवमानसोम योरयिर्वनुष्यता हिंसकेन शत्रुणा दूणाशोनाशयितुमशक्यः तं शत्रुभिर्दुष्टरं रयिं धनं अस्मभ्यं विदा देहि ॥ ११ ॥

अथ द्वादशी—

अभ्यंर्षसहस्रिणंरयिंगोमंन्तमश्विनंम् । अभिवाजंमुतश्रवंः॥१२॥

अभि । अर्ष । सहस्रिणंम् । रयिम् । गोऽमंन्तम् ।
अश्विनंम् । अभि । वाजंम् । उत । श्रवंः ॥ १२ ॥

हे सोम त्वं सहस्रिणं बहुसंख्याकं गोमन्तं गोभिर्युक्तमश्विनं अश्ववंतं रयिं धनमभ्यर्षास्मानभिगमय । उतापिच वाजं बलं श्रवोन्नं चास्मानभिगमय ॥ १२ ॥

अथ त्रयोदशी—

सोमोदेवोनसूर्योद्रिभिःपवतेसुतः । दधानःकलशेरसंम् ॥ १३ ॥

सोमः । देवः । न । सूर्यः । अद्रिऽभिः । पवते ।
सुतः । दधानः । कलशे । रसंम् ॥ १३॥

देवोन देवइव सूर्यो रोचमानः सोमोद्रिभिर्ग्रावभिः सुतोभिषुतः सन् कलशे द्रोणकलशे रसं दधानो धारयन् पवते धारया क्षरति ॥ १३ ॥

अथ चतुर्दशी—

एतेधामान्यार्याशुक्राऋतस्यधारंया । वाजंगोमंन्तमक्षरन् ॥१४॥

एते । धामानि । आर्या । शुक्राः । ऋतस्य । धारया ।
वाजम् । गोऽमन्तम् । अक्षरन् ॥ १४ ॥

एते अभिषुता इमे शुक्रादीप्ताः सोमा आर्या आर्याणां श्रेष्ठानां यजमानानां धामानि गृहान् प्रति गोमन्तं गोभिर्युक्तं वाजमन्नं ऋतस्योदकस्य धारया अक्षरन् क्षरन्ति ॥१४॥

अथ पञ्चदशी—

सुताइन्द्रायवज्रिणेसोमासोदध्याशिरः । पवित्रमत्यक्षरन् ॥१५॥३२॥

सुताः । इन्द्राय । वज्रिणे । सोमासः । दधिऽआशिरः ।
पवित्रम् । अति । अक्षरन् ॥ १५ ॥ ३२ ॥

वज्रिणे वज्रवते इन्द्रायेन्द्रार्थं सुताअभिषुता दध्याशिरः दधिसंस्कृताः सोमासः सोमाः पवित्रमत्यतिक्रम्याक्षरन् धारया क्षरन्ति ॥ १५ ॥

॥ इति सप्तमस्य प्रथमे द्वात्रिंशोवर्गः ॥ ३२ ॥

अथ षोडशी—

प्रसोममधुमत्तमोरायेअर्षपवित्रआ । मदोयोदेववीतमः ॥ १६ ॥

प्र । सोम । मधुमत्ऽतमः । राये । अर्ष । पवित्रे । आ ।
मदः । यः । देवऽवीतमः ॥ १६ ॥

हे सोम तव योमदोरसो मधुमत्तमोत्यन्तं मधुमान् देववीतमोतिशयेन देवकामश्च तं रसं रायेस्माकं धनार्थं पवित्रे प्रार्ष धारया क्षर ॥ १६ ॥

अथ सप्तदशी—

तमींमृजन्त्यायवोहरिंनदीषुवाजिनम् । इन्दुमिन्द्रायमत्सरम् ॥१७॥

तम् । ईम् । इति । मृजन्ति । आयवः । हरिम् । नदीषु । वाजिनम् ।
इन्दुम् । इन्द्राय । मत्सरम् ॥ १७ ॥

हरिं हरितवर्णं वाजिनं बलिनं मत्सरं मदकरं तं पवमानमीमेनमिन्दुं मत्सरं सोममायवोमनुष्याऋत्विजः इन्द्रायेन्द्रार्थं नदीषु वसतीवरीषु मृजन्ति मार्जयन्ति ॥ १७ ॥

अथाष्टादशी–

आपवस्वहिरण्यवदश्वावत्सोमवीरवत् । वाजंगोमन्तमाभर॥१८॥

आ । पवस्व । हिरण्यऽवत् । अश्वऽवत् । सोम । वीरऽवत् ।
वाजम् । गोऽमन्तम् । आ । भर ॥ १८ ॥

हे सोम त्वं हिरण्यवत् सुवर्णोपेतमश्ववदश्वयुक्तंच वीरवत् पुत्राद्युपेतंच धनमापवस्वास्मान् प्रति क्षर । अपिच गोमन्तं पशुभिरुपेतं वाजमन्नमाभरास्मभ्यमाहर ॥ १८ ॥

अथैकोनविंशी–

परिवाजेनवाजयुमव्योवारेषुसिञ्चत । इन्द्रायमधुमत्तमम् ॥ १९॥

परि । वाजे । न । वाजऽयुम् । अव्यः । वारेषु । सिञ्चत ।
इन्द्राय । मधुमत्ऽतमम् ॥ १९ ॥

वाजयुं युद्धकामं मधुमत्तममतिशयेनमधुमन्तं सोममिन्द्रायेद्रार्थं अव्यः अवेर्वारेषु वालेषु दशापवित्रे वाजे न युद्धेइव हे ऋत्विजः परिषिंचत ॥ १९ ॥

अथ विंशी–

कविंमृजन्तिमर्ज्यंधीभिर्विप्राअवस्यवः । वृषाकनिक्रदर्षति॥२०॥३३॥

कविम् । मृजन्ति । मर्ज्यम् । धीभिः । विप्राः । अवस्यवः ।
वृषा । कनिक्रत् । अर्षति ॥ २० ॥ ३३ ॥

अवस्यवो रक्षणकामा विप्रामेधाविनऋत्विजः धीभिरंगुलीभिर्मर्ज्यं मर्जनीयं कविं क्रान्तकर्माणं ष्यं सोमं मृजन्ति मर्जयन्ति सोयं वृषा सेचकः सोमः कनिक्रदत् शब्दंकुर्वन् अर्षति धारया क्षरति ॥ २० ॥

॥ इति सप्तमस्य प्रथमे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

अथैकविंशी—

वृषणंधीभिरप्तुरंसोममृतस्यधारया । मतीविप्राःसमस्वरन् ॥ २१॥

वृषणम् । धीभिः । अप्ऽतुरम् । सोमम् । ऋतस्य । धारया ।
मती । विप्राः । सम् । अस्वरन् ॥ २१ ॥

विप्रा मेधाविनऋत्विजः वृषणं कामानां वर्षकं अप्तुरमपांप्रेरकं सोमं धीभिरंगुलीभिर्मती मत्या च ऋतस्योदकस्य धारया समस्वरन्प्रेरयन्ति ॥ २१ ॥

अथ द्वाविंशी—

पवस्वदेवायुषगिन्द्रंगच्छतुतेमदः । वायुमारोहधर्मणा ॥ २२ ॥

पवस्व । देव । आयुषक् । इन्द्रम् । गच्छतु । ते । मदः ।
वायुम् । आ । रोह । धर्मणा ॥ २२ ॥

हे देव द्योतमान सोम पवस्व धारया क्षर । अपिच ते तव मदो मदकरोरस आयुषगनुषक्तमिन्द्रं प्रतिगच्छतु । अपिच त्वं वायुं धर्मणा धारकेन रसेनारोह प्राप्नुहि ॥ २२ ॥

अथ त्रयोविंशी—

पवमाननितोशसेरयिंसोमश्रवाय्यम् । प्रियःसमुद्रमाविश ॥ २३ ॥

पवमान । नि । तोशसे । रयिम् । सोम । श्रवाय्यम् ।
प्रियः । समुद्रम् । आ । विश ॥ २३ ॥

हे पवमान सोम यस्त्वं श्रवाय्यं श्रवणीयं रयिं शत्रूणां धनं नितोशसे नितरां पीडयसि सत्वं प्रियःसन् समुद्रं द्रोणकलशमाविश ॥ २३ ॥

अथ चतुर्विंशी—

अपघ्नन्पवसेमृधःक्रतुवित्सोममत्सरः । नुदस्वादेवयुंजनम् ॥ २४॥

अपऽघ्नन् । पवसे । मृधः । क्रतुऽवित् । सोम । मत्सरः ।
नुदस्व । अदेवऽयुम् । जनम् ॥ २४ ॥

हे सोम मत्सरो मदकरो यस्त्वं मृधोहिंसकान् शत्रून् अपघ्नन् मारयन् क्रतुविद्स्मभ्यं प्रज्ञां प्रयच्छन् पवसे क्षरसि । सत्वमदेवयुमदेवकामं जनं राक्षसवर्गं नुदस्व प्रेरय ॥ २४ ॥

अथ पञ्चविंशी—

पवमानाअसृक्षतसोमाःशुक्रासइन्दवः । अभिविश्वानिकाव्या॥२५॥३४॥

पवमानाः । असृक्षत । सोमाः । शुक्रासः । इन्दवः । अभि ।
विश्वानि । काव्या ॥ २५ ॥ ३४ ॥

शुक्रास उज्ज्वला इन्दवोदीप्ताः पवमानाः क्षरन्तः सोमाः विश्वानि काव्या काव्यानि स्तोत्राण्यभ्यसृक्षत सृज्यन्ते ऋत्विग्भिः ॥ २५ ॥

॥ इति सप्तमस्य प्रथमे चतुस्त्रिंशोवर्गः ॥ ३४ ॥

अथ षड्विंशी—

पवमानासआशवःशुभ्राअसृग्रमिन्दवः । घ्नन्तोविश्वाअपद्विषः॥२६॥

पवमानासः । आशवः । शुभ्राः । असृग्रम् । इन्दवः । घ्नन्तः ।
विश्वाः । अप । द्विषः ॥ २६ ॥

आशवः शीघ्राः शुभ्राः शोभनाः पवमानासः क्षरन्त इन्दवो दीप्ताः सोमा विश्वाः सर्वान्द्विषोद्वेष्टॄन् शत्रूनपघ्नन्तो मारयन्तः असृग्रमसृज्यन्ते ॥ २६ ॥

अथ सप्तविंशी—

पवमानादिवस्पर्यन्तरिक्षादसृक्षत । पृथिव्याअधिसानवि ॥ २७॥

पवमानाः । दिवः । परि । अन्तरिक्षात् । असृक्षत । पृथिव्याः ।
अधि । सानवि ॥ २७॥

पवमानाः सोमाः दिवो द्युलोकादन्तरिक्षाच्च पृथिव्या भूम्याअधि सानवि समुच्छ्रिते देशे देवयजने पर्यसृक्षत सृज्यन्ते ॥ २७ ॥

अथाष्टाविंशी—

पुनानःसोमधारयेन्दोविश्वाअपस्रिधः। जहिरक्षांसिसुक्रतो॥ २८॥

पुनानः। सोम। धारया। इन्दो इति। विश्वाः। अप। स्रिधः।
जहि। रक्षांसि सुक्रतो इति सुऽक्रतो॥ २८॥

हे इन्दो दीप्त सुक्रतो सुकर्मन् सोम धारया पुनानः पूयमानस्त्वं विश्वाः सर्वान् स्रिधो द्वेष्टॄन् शत्रून् रक्षांसि राक्षसांश्चापजहि मारय॥ २८॥

अथैकोनत्रिंशी—

अपघ्नन्त्सोमरक्षसोभ्यर्षकनिक्रदत्। द्युमन्तंशुष्ममुत्तमम्॥२९॥

अपऽघ्नन्। सोम। रक्षसः। अभि। अर्ष। कनिक्रदत्।
द्युऽमन्तम्। शुष्मम्। उत्ऽतमम्॥ २९॥

हे सोम त्वं रक्षसो रक्षांस्यपघ्नन् विनाशयन् कनिक्रदच्छब्दंकुर्वन् द्युमन्तं दीप्तिमन्तमुत्तमं श्रेष्ठं शुष्मं बलमभ्यर्षास्मान् प्रति पवस्व॥ २९॥

अथ त्रिंशी—

अस्मेवसूनिधारयसोमदिव्यानिपार्थिवा। इन्दोविश्वानिवार्या॥३०॥३५॥

अस्मे इति। वसूनि। धारय। सोम। दिव्यानि।
पार्थिवा। इन्दो इति। विश्वानि। वार्या॥ ३०॥ ३५॥

हे इन्दो दीप्त सोम दिव्यानि दिविभवानि पार्थिवा पार्थिवानि पृथिव्यां जातानि च विश्वा सर्वाणि वार्या वार्याणि वरणीयानि वसून्यस्मेस्मासु धारय प्रक्षिप॥३०॥

॥ इति सप्तमस्य प्रथमे पंचत्रिंशोवर्गः॥ ३५॥

वृषासोमेति त्रिंशदृचं चतुर्थंसूक्तं मारीचस्य कश्यपस्यार्षं गायत्रं पमानसौम्यं। तथाचानुक्रान्तं— वृषासोमकश्यपइति। उक्तोविनियोगः।

तत्र प्रथमा—

वृषासोमद्युमाँअसिवृषादेववृषव्रतः । वृषाधर्माणिदधिषे ॥ १ ॥

वृषा । सोम । द्युऽमान् । असि । वृषा । देव ।
वृषऽव्रतः । वृषा । धर्माणि । दधिषे ॥ १ ॥

हे सोम वृषा वर्षकस्त्वं द्युमान् दीप्तिमानसि । अपिच हे देव द्योतमान सोम वृषा त्वं वृषव्रतो वर्षणशीलकर्मासि । किंच हे सोम वृषा त्वं धर्माणि देवानां मनुष्याणां च हितानि कर्माणि दधिषे धारयसि ॥ १ ॥

अथ द्वितीया—

वृष्णस्तेवृष्ण्यंशवोवृषावनंवृषामदः । सत्यंवृषन्वृषेदसि ॥ २ ॥

वृष्णः । ते । वृष्ण्यम् । शवः । वृषा । वनम् । वृषा ।
मदः । सत्यम् । वृषन् । वृषा । इत् । असि ॥ २ ॥

हे वृषन् कामानां वर्षक सोम वृष्णो वर्षितुस्ते तव शवोबलं वृष्ण्यं वर्षणशीलं भवति । वनं तवभजनमपि वृषा वर्षणशीलं । मदस्तवरसोपि वृषा वर्षणशीलः । सत्यं सत्यमेव त्वं वृषेत् वर्षणशीलएवासि भवसि ॥२॥

अथ तृतीया—

अश्वोनचक्रदोवृषासंगाइन्दोसमर्वतः । विनोरायेदुरोवृधि ॥ ३ ॥

अश्वः । न । चक्रदः । वृषा । सम् । गाः । इन्दो इति ।
सम् । अर्वतः । वि । नः । राये । दुरः । वृधि ॥ ३ ॥

हे इन्दो सोम वृषा त्वं अश्वोनाश्वइव संचक्रदः संक्रंदसे । अपिच गाः पशूनर्वतोश्वांश्चास्मभ्यं संप्रयच्छसीतिशेषः । किंच नोस्माकं राये धनाय दुरोद्वाराणि विवृधि विवृतानि कुरु ॥ ३ ॥

अथ चतुर्थी–

असृक्षतप्रवाजिनोगव्यासोमासोअश्वया । शुक्रासोवीरयाशवः ॥ ४ ॥

असृक्षत । प्र । वाजिनः । गव्या । सोमासः । अश्वऽया ।
शुक्रासः । वीरऽया । आशवः ॥ ४ ॥

वाजिनो बलवन्तः शुक्रासः शुक्राउज्ज्वलाः आशवो वेगवन्तश्च सोमासः सोमाः गव्या गवेच्छया अश्वयाश्वेच्छया च वीरया पुत्रेच्छयाच प्रासृक्षत ऋत्विग्भिः सृज्यन्ते ॥ ४ ॥

अथ पञ्चमी–

शुम्भमानाऋतायुभिर्मृज्यमानागभस्त्योः । पवन्तेवारेअव्यये ॥ ५ ॥ ३६ ॥

शुम्भमानाः । ऋतयुऽभिः । मृज्यमानाः ।
गभस्त्योः । पवन्ते । वारे । अव्यये ॥ ५ ॥ ३६ ॥

ऋतायुभिर्यज्ञकामैः शुंभमानाः अलंक्रियमाणा गभस्त्योः गभस्तिभ्यां बाहुभ्यां । गभस्ती बाहू इति बाहुनामसुपाठात् । मृज्यमानाः शोध्यमानाः सोमाः अव्यये अविमये वारे वाले पवित्रे पवन्ते क्षरन्ति ॥ ५ ॥

॥ इति सप्तमस्य प्रथमे षट्त्रिंशोवर्गः ॥ ३६ ॥

अथ षष्ठी–

तेविश्वादाशुषेवसुसोमादिव्यानिपार्थिवा । पवन्तामान्तरिक्ष्या ॥ ६ ॥

ते । विश्वा । दाशुषे । वसु । सोमाः । दिव्यानि ।
पार्थिवा । पवन्ताम् । आ । अन्तरिक्ष्या ॥ ६ ॥

ते सोमा दिव्यानि दिविभवानि पार्थिवा पार्थिवानि पृथिव्यां संभूतानि चान्तरिक्ष्या अन्तरिक्षाण्यन्तरिक्षेजातानिच विश्वा विश्वानि वसु वसूनि धनानि दाशुषे हविषां प्रदात्रे यजमानाय पवन्तां क्षरन्तु ॥ ६ ॥

अथ सप्तमी–

पवंमानस्यविश्ववित्प्रतेसर्गाअसृक्षत । सूर्यस्येवनरश्मयः ॥ ७ ॥

पवंमानस्य । विश्वऽवित् । प्र । ते । सर्गाः । असृक्षत ।
सूर्यस्यऽइव । न । रश्मयः ॥ ७ ॥

हे विश्वविद्विश्वस्य द्रष्टः सोम पवमानस्य क्षरतः ते तव सर्गाः प्रसृज्यमाना धाराः सूर्यस्येव रश्मयः सूर्यस्य किरणाइव प्रकाशमानाः । नेति संप्रत्यर्थे । इदानीं प्रासृक्षत प्रासृज्यन्त॥७॥

अथाष्टमी–

केतुंकृण्वन्दिवस्परिविश्वारूपाभ्यर्षसि । समुद्रःसोमपिन्वसे ॥८ ॥

केतुम् । कृण्वन् । दिवः । परि । विश्वा । रूपा । अभि ।
अर्षसि । समुद्रः । सोम । पिन्वसे ॥ ८ ॥

हे सोम समुद्रः समुद्रवन्ति यस्माद्रसाः ससमुद्रः सत्वं केतुं प्रज्ञानं कृण्वन् कुर्वन् अस्माकं विश्वा विश्वानि रूपा रूपाणि दिवोन्तरिक्षादभ्यर्षस्यभिपवसे परिपिन्वसे नानाविधानि धनानि चास्मभ्यं प्रयच्छसि ॥ ८ ॥

अथ नवमी–

हिन्वानोवाचमिष्यसिपवमानविधर्मणि । अक्रान्देवोनसूर्यः ॥ ९॥

हिन्वानः । वाचम् । इष्यसि । पवमान । विऽधर्मणि ।
अक्रान् । देवः । न । सूर्यः ॥ ९ ॥

हे पवमान सोम हिन्वानः प्रेर्यमाणस्त्वं वाचं शब्दमिष्यसि प्रेरयसि । कदेत्यत्राह–यदा तव रसः सूर्योदेवोन देवइव विधर्मणि विधारके पवित्रे अक्रानक्रमीत् तदेत्यर्थः ॥ ९ ॥

अथ दशमी–

इन्दुःपविष्टचेतनःप्रियःकवीनांमती । सृजदश्वंरथीरिव॥१०॥२७॥

इन्दुः । प॒वि॒ष्ट॒ । चेत॑नः । प्रि॒यः । क॒वीना॑म् ।
म॒ती । सृ॒जत् । अश्व॑म् । र॒थीःऽइ॑व ॥ १० ॥ ३७ ॥

चेतनः प्रज्ञापकः प्रियो देवानां प्रीतिकरः इन्दुः सोमः कवीनां क्रान्तकर्मणां स्तोतॄणां मती मत्या स्तुत्या पविष्ट पवते । अश्वं हयं रथीरिव रथीवोर्मिं सृजत सृजति च ॥ १० ॥

॥ इति सप्तमस्य प्रथमे सप्तत्रिंशो वर्गः ॥ ३७ ॥

अथैकादशी—

ऊ॒र्मिर्यस्ते॑ प॒वित्र॒ आ दे॑वा॒वीः प॒र्यक्ष॑रत् । सीद॑न्नृ॒तस्य॒ योनि॒मा ॥११॥

ऊ॒र्मिः । यः । ते॒ । प॒वित्रे॑ । आ । दे॒व॒ऽअ॒वीः ।
प॒रि॒ऽअक्ष॑रत् । सीद॑न् । ऋ॒तस्य॑ । योनि॑म् । आ ॥ ११ ॥

हे सोम ते तव यो देवावीर्देवकामः ऊर्मिस्तरंगः ऋतस्य यज्ञस्य योनिं स्थानं आसीदन् पवित्रे पर्यक्षरत् परिक्षरति तमूर्मिं सृजतीति पूर्वत्र संबन्धः ॥ ११ ॥

अथ द्वादशी—

स नो॑ अर्ष प॒वित्र॒ आ मदो॒ यो दे॑व॒वीत॑मः । इन्द॒विन्द्रा॑य पी॒तये॑ ॥१२॥

सः । नः॒ । अ॒र्ष॒ । प॒वित्रे॑ । आ । मदः॑ । यः ।
दे॒व॒ऽवीत॑मः । इन्दो॒ इति॑ । इन्द्रा॑य । पी॒तये॑ ॥ १२ ॥

हे इन्दो यस्त्वं देववीतमः अतिशयेन देवकामो मदो मदकरश्च भवसि । स त्वं नोऽस्माकं पवित्रे इन्द्रायेन्द्रस्य पीतये पानायार्षापवस्व ॥ १२ ॥

अथ त्रयोदशी—

इ॒षे प॑वस्व॒ धार॑या मृ॒ज्यमा॑नो मनी॒षिभिः॑ । इन्दो॑ रु॒चाभि गा इ॑हि ॥१३॥

इ॒षे । प॒व॒स्व॒ । धार॑या । मृ॒ज्यमा॑नः । म॒नी॒षिऽभिः॑ ।
इन्दो॒ इति॑ । रु॒चा । अ॒भि । गाः । इ॒हि॒ ॥ १३ ॥

हे इन्दो सोम मनीषिभिर्ऋत्विग्भिः मृज्यमानः शोध्यमानस्त्वमिषेस्माकमन्नाय धारया पवस्व क्षर। रुचा रोचमानेनान्धसा गाः पशूनभीह्यभिगच्छ ॥ १३ ॥

अथ चतुर्दशी—

पुनानोवरिवस्कृध्यूर्जंजनायगिर्वणः। हरेसृजानआशिरम् ॥१४॥

पुनानः। वरिवः। कृधि। ऊर्जम्। जनाय। गिर्वणः।
हरे। सृजानः। आऽशिरम् ॥ १४ ॥

हे गिर्वणो गीर्भिर्वननीय हरे हरितवर्ण सोम आशिरं क्षीरं प्रतिसृजानो विसृज्यमानः पुनानः पूयमानस्त्वं जनाय यजमानार्थं वरिवोधनमूर्जमन्नंच कृधि कुरु ॥ १४ ॥

अथ पंचदशी—

पुनानोदेववीतयइन्द्रस्ययाहिनिष्कृतम्। द्युतानोवाजिभिर्यतः ॥१५॥३८॥

पुनानः। देवऽवीतये। इन्द्रस्य। याहि। निःऽकृतम्।
द्युतानः। वाजिऽभिः। यतः ॥ १५ ॥ ३८ ॥

हे सोम द्युतानो दीप्यमानो वाजिभिः बलिभिर्यजमानैर्यतः संगृहीतो देववीतये यज्ञार्थं पुनानः पूयमानस्त्वं इन्द्रस्य निष्कृतं स्थानं याहि गच्छ ॥ १५ ॥

॥ इति सप्तमस्य प्रथमेष्टत्रिंशोवर्गः ॥ ३८ ॥

अथ षोडशी—

प्रहिन्वानासइन्दवोच्छासमुद्रमाशवः। धियाजूताअसृक्षत ॥१६॥

प्र। हिन्वानासः। इन्दवः। अच्छ। समुद्रम्।
आशवः। धिया। जूताः। असृक्षत ॥ १६ ॥

आशवो वेगवन्त इन्दवः सोमाः समुद्रमन्तरिक्षमच्छ प्रति हिन्वानासोहिन्वानाः प्रेर्यमाणाः धिया अंगुल्या जूताः कृष्टाश्च प्रासृक्षत सृज्यन्ते ॥ १६ ॥

अथ सप्तदशी–

मर्मृजानासआयवोवृथासमुद्रमिन्दवः । अग्मन्नृतस्ययोनिमा ॥१७॥

मर्मृजानासः । आयवः । वृथा । समुद्रम् । इन्दवः ।
अग्मन् । ऋतस्य । योनिम् । आ ॥ १७ ॥

मर्मृजानासो मर्मृज्यमानाः आयवोगन्तारं इन्दवः सोमाः वृथायासं विनेव समुद्रमन्तरिक्षं गच्छन्ति । एतदेव दर्शयति ऋतस्योदकस्य योनिं स्थानं आग्मन् गच्छन्तीति ॥ १७ ॥

अथाष्टादशी–

परिणोयाह्यस्मयुर्विश्वावसून्योजसा । पाहिनःशर्मवीरवत् ॥ १८॥

परि । नः । याहि । अस्मऽयुः । विश्वा । वसूनि ।
ओजसा । पाहि । नः । शर्म । वीरऽवत् ॥ १८ ॥

हे सोमास्मयुरस्मत्कामस्त्वं नोस्माकं विश्वा विश्वानि वसूनि धनानि ओजसा बलेन सह परियाहि रक्षार्थं परिगच्छ । अपिच नोस्माकं वीरवत पुत्रवत् शर्म गृहं पाहि रक्ष ॥ १८ ॥

अथैकोनविंशी–

मिमातिवह्निरेतशःपदंयुजानऋक्वभिः । प्रयत्समुद्रआहितः ॥१९॥

मिमाति । वह्निः । एतशः । पदम् । युजानः ।
ऋक्वऽभिः । प्र । यत् । समुद्रे । आऽहितः ॥ १९ ॥

हे सोम यद्यदा योवह्निर्वहनशील एतशोश्वः मिमाति शब्दंकरोति ऋक्वभिर्ऋग्विभिः स्तोतृभिः पदं युजानो यज्ञे युंजानो निदधत् स्तोत्रश्रवणार्थमागच्छति च । सतदा यज्ञवाहकाश्वात्मा त्वं समुद्रे उदके वसतीवरीषु प्राहितोभवसि ॥ १९ ॥

अथ विंशी–

आयद्योनिंहिरण्ययमाशुर्ऋतस्यसीदति । जहात्यप्रचेतसः ॥२०॥२९॥

आ । यत् । योनिम् । हिरण्ययम् । आशुः । ऋतस्य ।
सीदति । जहाति । अप्रऽचेतसः ॥ २० ॥ ३९ ॥

यद्यदाशुर्वेगवान् सोम ऋतस्य यज्ञस्य हिरण्ययं हिरणमयं योनिं स्थानं हिरण्यपाणिरभिषुणोतीत्युक्तमासीदति । तदानीमप्रचेतसो जहाति विसृजति अस्तोतॄणां यज्ञं नाभिगच्छति । किंतु स्तोतॄणामेव यज्ञमभिगच्छतीत्यर्थः ॥ २०॥

॥ इति सप्तमस्य प्रथमे एकोनचत्वारिंशोवर्गः ॥ ३९ ॥

अथैकाविंशी—

अभिवेनाअनूषतेयक्षन्तिप्रचेतसः । मज्जन्त्यविचेतसः ॥ २१ ॥

अभि । वेनाः । अनूषत । इयक्षन्ति । प्रऽचेतसः ।
मज्जन्ति । अविऽचेतसः ॥ २१ ॥

वेनाः कान्ताः स्तोतारोऽभ्यनूषत सोममभिष्टुवन्ति प्रचेतसः सुमतयः इयक्षन्ति यष्टुमिच्छन्ति च । अविचेतसो विशिष्टमतयो विचेतसः अविचेतसोविपरीतमतयइत्यर्थः मज्जन्ति निमज्जन्ति । येसोमं नाभिष्टुभन्ति न यजंति च ते नरके पतन्तीत्यर्थः ॥ २१ ॥

अथ द्वाविंशी—

इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः । ऋतस्ययोनिमासदम् ॥२२॥

इन्द्राय । इन्दो इति । मरुत्वते । पवस्व ।
मधुमत्ऽतमः । ऋतस्य । योनिम् । आऽसदम् ॥ २२ ॥

हे इन्दो सोम मधुमत्तमोतिशयेन मधुमान् त्वं ऋतस्य यज्ञस्य योनिं स्थानमासदमुपवेष्टुं मरुत्वते इन्द्रायेद्रार्थं पवस्व क्षर ॥ २२ ॥

अथ त्रयोविंशी—

तंत्वाविप्रावचोविदःपरिष्कृण्वन्तिवेधसः । सन्त्वामृजंन्त्यायवः ॥२३॥

तम् । त्वा । विप्राः । वचःऽविदः । परि । कृण्वन्ति ।
वेधसः । सम् । त्वा । मृजन्ति । आयवः ॥ २३ ॥

हे सोम तं पवमानं त्वा त्वां विप्राः प्राज्ञा वेधसः कर्मणांकर्तारो वचोविदः स्तोतारः परिष्कृण्वन्ति अलंकुर्वन्ति । अपिच त्वा त्वामायवोमनुष्याः संमृजन्ति सम्यक् शोधयन्ति॥२३॥

अथ चतुर्विंशी—

रसंतेमित्रोअर्यमापिबन्तिवरुणःकवे । पवमानस्यमरुतः ॥ २४॥

रसम् । ते । मित्रः । अर्यमा । पिबन्ति । वरुणः ।
कवे । पवमानस्य । मरुतः ॥ २४ ॥

हे कवे क्रान्तकर्मन् सोम पवमानस्य क्षरतस्ते तव रसं मित्रःअर्यमा च वरुणश्च मरुतश्चैते सर्वेदेवाः पिबन्ति ॥ २४ ॥

अथ पंचविंशी—

त्वंसोमविपश्चितंपुनानोवाचमिष्यसि । इन्दोसहस्रभर्णसम्॥२५॥४०॥

त्वम् । सोम । विपःऽचितम् । पुनानः । वाचम् ।
इष्यसि । इन्दो इति । सहस्रऽभर्णसम् ॥ २५ ॥ ४० ॥

हे इन्दो दीप्तसोम पुनानः पूयमानस्त्वं विपश्चितं प्रज्ञया पवित्रां सहस्रभर्णसं बहुभरणां वाचमिष्यसि प्रेरयसि ॥ २५ ॥

॥ इति सप्तमस्य प्रथमे चत्वारिंशोवर्गः ॥ ४० ॥

अथ षड्विंशी—

उतोसहस्रभर्णसंवाचंसोममखस्युवम् । पुनानइन्दवाभर ॥ २६ ॥

उतो इति । सहस्रऽभर्णसम् । वाचम् । सोम ।
मखस्युवम् । पुनानः । इन्दो इति । आ । भर ॥ २६ ॥

उतो अपिच हे इन्दो दीप्तसोम पुनानः पूयमानस्त्वं सहस्रभर्णसं सहस्रभरणां मखस्युवं धनकांमां यज्ञकामां वाचमस्मभ्यमाभराहर ॥ २६ ॥

अथ सप्तविंशी—

पुनानइन्दवेषांपुरुहूतजनानाम् । प्रियःसमुद्रमाविश ॥ २७ ॥

पुनानः । इन्दो इति । एषाम् । पुरुऽहूत । जनानाम् ।
प्रियः । समुद्रम् । आ । विश ॥ २७ ॥

हे पुरुहूत बहुभिराहूत इन्दो सोम पुनानः पूयमानस्त्वं एषामस्मिन् यागे स्तोत्रं कुर्वतां जनानां प्रियः सन् समुद्रं द्रोणकलशमाविश प्रविश ॥ २७ ॥

अथाष्टाविंशी—

दविद्युतत्यारुचापरिष्टोभन्त्याकृपा । सोमाःशुक्रागवाशिरः ॥२८॥

दविद्युतत्या । रुचा । परिऽस्तोभन्त्या । कृपा ।
सोमाः । शुक्राः । गोऽआशिरः ॥ २८ ॥

शुक्रा उज्ज्वलाः दविद्युतत्या द्योतमानया रुचा दीप्त्या परिष्टोभंत्या परितः शब्दायमानया कृपा धारयाच युक्ताः सोमाः गवाशिरो भवन्ति गव्येन पयसा मिश्रिता भवन्तीत्यर्थः ॥ २८ ॥

अथैकोनत्रिंशी—

हिन्वानोहेतृभिर्यतआवाजंवाज्यक्रमीत् । सीदन्तोवनुषोयथा ॥२९॥

हिन्वानः । हेतृऽभिः । यतः । आ । वाजम् । वाजी ।
अक्रमीत् । सीदन्तः । वनुषः । यथा ॥ २९ ॥

वाजी बलवान् सोमो हेतृभिः प्रेरकैः स्तोतृभिः हिन्वानः स्तोत्रैः प्रेर्यमाणो यतः संयतः सन् वाजं यागाख्यं युद्धमाक्रमीदाक्रमति । तत्रदृष्टान्तः—यथावनुषोहन्तारोभटाः सीदन्तोयुद्धं प्रविशन्तः आक्रमन्ति तद्वदित्यर्थः ॥ २९ ॥

अथ त्रिंशी—

ऋधक्सोमस्वस्तयेसंजग्मानोदिवःकविः । पवस्वसूर्योदृशे ॥३०॥४१॥

ऋधक् । सोम । स्वस्तये । सम्ऽजग्मानः । दिवः ।
कविः । पवस्व । सूर्यः । दृशे ॥ ३० ॥ ४१ ॥

हे सोम कविः क्रान्तः सूर्यः सुवीर्यस्त्वं ऋधक् ऋध्नुवन् । तथाचयास्कः—ऋधगितिपृथग्भावस्यानुप्रवचनं भवत्यथाप्यृध्नोत्यर्थेदृश्यतइति[1] । संजग्मानः संगच्छमानः स्वस्तये दृशे दर्शनायच दिवः द्युलोकात् पवस्व क्षर ॥ ३० ॥

॥ इति सप्तमस्य प्रथमे एकचत्वारिंशोवर्गः ॥ ४१ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टकेप्रथमोध्यायः ॥ १ ॥

---

१ नि० ४. २५. ।

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत् । निर्ममे तमहंवन्दे विद्यातीर्थमहेश्वरम् ॥१॥

हिन्वन्तीति त्रिंशदृचं पञ्चमं सूक्तं वरुणपुत्रस्य भृगोरार्षं भार्गवस्य जमदग्नेर्वा । गायत्रं पवमानसोमदेवताकं । तथाचानुक्रम्यते—हिन्वन्ति भृगुर्वारुणिर्जमदग्निर्वेति । गतोविनियोगः ।

तत्र प्रथमा—

ॐम् हिन्वन्तिसूरमुस्रयःस्वसारोजामयस्पतिम् । महामिन्दुंमहीयुवः ॥१॥

हिन्वन्ति । सूरम् । उस्रयः । स्वसारः । जामयः ।
पतिम् । महाम् । इन्दुम् । महीयुवः ॥ १ ॥

अत्र सर्वत्र पवमानः सोमः स्तूयते । तत्रादावृषिः सोमं प्रत्याह मदीया अंगुलयः त्वामभिषोतुं प्रेरयन्तीति । तदुच्यते—स्वसारः अंगुलिनामैतत् सुष्ठु कर्मसु प्रेर्यन्ते ऋत्विग्भिरिति स्वसारः जामय एकस्मात्पाणेरुत्पन्नत्वात्परस्परं बन्धुभूताः उस्रयः कर्मार्थं निवसंत्यः सर्वत्र गन्त्र्य इत्यर्थः । तादृश्यंगुलयः महीयुवः त्वदभिषवं कामयमानाः सत्यः सूरं सुवीर्यं सोमे पीते वीर्यं भवतीति शोभनवीर्यकारणं वा सर्वेषां कर्मणिप्रेरकं वा तादृशं पतिं सर्वस्य स्थावरजंगमजातस्य स्वामिनं यस्माद्देवार्थमिज्यते अतएव महां देवेभ्योदीयमानत्वेन महान्तं मंहनीयं वा इन्दुं ग्रहेषु स्पन्दमानं सोमं हिन्वन्ति प्रेरयन्ति । हिवर्धनगत्योः स्वादिः ॥ १ ॥

अथ द्वितीया—

पवमानरुचारुचादेवोदेवेभ्यस्परि । विश्वावसून्याविश ॥ २ ॥

पवमान । रुचाऽरुचा । देवः । देवेभ्यः ।
परि । विश्वा । वसूनि । आ । विश ॥ २ ॥

हे पवमान दशापवित्रेण पूयमान यद्वा पुनान शुद्ध सोम रुचारुचा रुचदीप्तौ सर्वेण तेजसा देवोदीप्यमानस्त्वं देवेभ्यः परि देवेभ्यः सकाशात् विश्वा व्याप्तानि सर्वाणि बहूनि वसूः

नि धनानि अस्माकमाविश प्रापय। यद्वा देवेभ्यस्त्वदर्थं सर्वाणि वसूनि निवासस्थानानि ग्रहादीनि आविश समन्तात्प्रविश ॥ २ ॥

अथ तृतीया—

**आपवमानसुष्टुतिंवृष्टिंदेवेभ्योदुवः। इषेपवस्वसंयतम् ॥ ३ ॥**

**आ। पवमान। सुऽस्तुतिम्। वृष्टिम्। देवेभ्यः।**
**दुवः। इषे। पवस्व। सम्ऽयतम् ॥ ३ ॥**

हे पवमान पूयमान पुनान वा सोम सुष्टुतिं शोभनस्तुतियुक्तां वृष्टिं देवेभ्यः देवानां दुवः सुपांसुलुगिति चतुर्थ्यालुक् दुवसे परिचरणाय आपवस्व आगमय त्वं यथा मदीयया स्तुत्या वृष्टिर्भविष्यति तथाकुर्वित्यर्थः। किंच अस्माकमिषे अन्नार्थंच संयतं सम्यगस्मान् संगच्छन्तीं वृष्टिं कुरु। यद्वा दुवः परिचर्यामभिलक्ष्य क्रियमाणां सुष्टुतिं शोभनस्तुतिरूपां वृष्टिं बहुस्तुतिमित्यर्थः एतां देवेभ्यः प्रापय ॥ ३ ॥

अथ चतुर्थी—

**वृषाह्यसिभानुनाद्युमन्तंत्वाहवामहे। पवमानस्वाध्यः ॥ ४ ॥**

**वृषा। हि। असि। भानुना। द्युऽमन्तम्।**
**त्वा। हवामहे। पवमान। सुऽआध्यः ॥ ४ ॥**

पवमान पूयमान वृषा अभिमतफलानां वर्षितासि हि भवसि खलु। तस्मात् हे पवमान पुनान वा सोम स्वाध्यः शोभनकर्माणः सुष्टुध्यानवन्तोवा वयं भानुना रश्मिना द्युमन्तं दीप्तिमन्तं अतिशयेन तेजस्विनं इत्यर्थः स्तुतिमन्तंवा त्वा त्वां हवामहे यज्ञेषु आह्वयामहे ॥ ४ ॥

अथ पञ्चमी—

**आपवस्वसुवीर्यंमन्दमानःस्वायुध। इहोष्विन्दवागहि ॥ ५ ॥ १ ॥**

१ हे पवमान पूयमान सोम स्वाध्यः सुकर्माणोवयं भानुना रश्मिना द्युमन्तं द्युतिमन्तं त्वा त्वां हवामहे आह्वयामः। हि यस्मात् त्वं वृषा कामानां वर्षयितासि ॥ इतिपुस्तकान्तरे।

आ । पवस्व । सुऽवीर्यम् । मन्दमानः । सुऽआयुध ।
इहो इति । सु । इन्दो इति । आ । गहि ॥ ५ ॥ १ ॥

हे स्वायुध यज्ञे स्फ्यकपालादीनि दशआयुधानीत्यभिधीयन्ते शोभनानि तानि यस्य सतथोक्तः । यद्वा धनुरादीन्यायुधानि यस्य सः तादृश हे सोम त्वं मन्दमानः मोदमानः सन् यद्वा अन्तर्णीतण्यर्थः देवान् स्वयं मादयन् सुवीर्यं शोभनवीर्योपेतं पुत्रादिकमस्माकं आपवस्व पवतिर्गत्यर्थः आप्रापय । किंच हे इन्दो ग्रहेषु चमसेषुच क्षरणशील सोम् इहो इह उ पदद्वयं उइत्यवधारणे इहैवास्मदीये यज्ञे एव सुष्ठु आगहि आगच्छ ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

यदद्भिःपरिषिच्यसेमृज्यमानोगभस्त्योः । द्रुणासधस्थमश्नुषे ॥ ६ ॥

यत् । अत्ऽभिः । परिऽसिच्यसे । मृज्यमानः ।
गभस्त्योः । द्रुणा । सधऽस्थम् । अश्नुषे ॥ ६ ॥

हे सोम गभस्त्योर्बाहुनामैतत् गभसन्ति दीपयन्ति निर्मथंत्याभ्यां अग्निमिति गभस्ती बाहू तयोर्मृज्यमानस्ताभ्यां शोध्यमानः सन् अद्भिः सोमसेचनार्थं चतुर्विधाआपस्ताभिर्वसतीवरीभिरेकधनाभिश्च यद्यदा परिषिच्यसे परितः सिच्यमानोभवसि । तदानीं द्रुणा द्रुममयेन परिप्लवेन पात्रेण गृह्यमाणः सन् सधस्थं सहतिष्ठंत्यत्रेति सधस्थं स्थानं ग्रहचमसादिकं अश्नुषे प्राप्नोषि ॥ ६ ॥

अथ सप्तमी—

प्रसोमायव्यश्ववत्पवमानायगायत । महेसहस्रचक्षसे ॥ ७ ॥

प्र । सोमाय । व्यश्वऽवत् । पवमानाय ।
गायत । महे । सहस्रऽचक्षसे ॥ ७ ॥

हे स्तोतारः पवमानाय दशापवित्रेण पूयमानाय पुनानाय वा सोमाय प्रगायत प्रकर्षेण सामगानं कुरुत अभिष्टुत वा । कथमिव व्यश्ववत् यथापूर्वं व्यश्वोनामऋषिः सोममगासीत्

तद्वत् यूयमपि। कीदृशाय महे महते देवेभ्यः स्वीयंक्रियमाणत्वेन गुणादिभिर्वा महत्त्वयुक्ताय सहस्रचक्षसे प्रयोगबाहुल्यापेक्षमेतद्वचनं सहस्रसंख्याकस्तोत्रयुक्ताय यद्वा नानाविधैर्देवैरनेकधाद्रष्टव्याय सोमायेति॥ ७॥

अथाष्टमी—

**यस्यवर्णंमधुश्चुतंहरिंहिन्वन्त्यद्रिभिः। इन्दुमिन्द्रायपीतये॥ ८॥**

**यस्य। वर्णम्। मधुऽश्चुतम्। हरिम्। हिन्वन्ति।**
**अद्रिऽभिः। इन्दुम्। इन्द्राय। पीतये॥ ८॥**

हे अध्वर्य्वादयः वर्णं शत्रूणां वारकं येन असौ पीयते तेन मत्तेन शत्रवः संप्रहार्यन्तइति शत्रुनिवारणसमर्थं मधुश्चुतं मधुररसस्य च्यावयितारं हरिं हरितवर्णं इन्दुं इन्धेरेतद्रूपमत्रेध्यते सर्वतोदीप्यमानं। उन्दीक्लेदनइत्यस्माद्वा। अभिषवानंतरं पात्रेषु क्षरणशीलं यस्य सोमस्य तव कारणमंशुं अद्रिभिर्हिन्वन्ति प्रेरयन्ति अभिषुण्वन्तीत्यर्थः। इन्द्राय पीतये इन्द्रस्य पानाय तदर्थमित्यर्थः॥ ८॥

अथ नवमी—

**तस्यतेवाजिनोवयंविश्वाधनानिजिग्युषः। सखित्वमावृणीमहे॥ ९॥**

**तस्य। ते। वाजिनः। वयम्। विश्वा। धनानि।**
**जिग्युषः। सखिऽत्वम्। आ। वृणीमहे॥ ९॥**

हे सोम वाजिनः संभृतहविष्कावयं विश्वा विश्वानि सर्वाणि व्याप्तानि वा शत्रुधनानि जिग्युषः जितवतस्तस्य पूर्वोक्तलक्षणस्य प्रसिद्धस्य वा ते तव सखित्वं स्तुत्यस्तोतृलक्षणं सख्यं आवृणीमहे संभजामहे अस्मभ्यं धनं देहीति संभजनं कुर्मइत्यर्थः। जिग्युषः जिजये लिटि क्वसौ वस्वेकाजादिति नियमादिडभावः सन्लिटोर्जेरित्यभ्यासादुत्तरस्य कवर्गादेशः जसिपरतोवसोःसंप्रसारणं क्वसुप्रत्ययस्वरः॥ ९॥

अथ दशमी—

**वृषापवस्वधारयामरुत्वतेचमत्सरः। विश्वादधानओजसा॥ १०॥ ३॥**

वृषा । पवस्व । धारया । मरुत्वते । च । मत्सरः ।
विश्वा । दधानः । ओजसा ॥ १० ॥ २ ॥

हे सोम त्वं वृषा स्तोतॄणामभिमतफलस्य वर्षकः सन् धारया त्वदीयया पवस्व द्रोणकलशमागच्छ । पवतिर्गतिकर्मा आगतस्त्वं यदा अस्माभिरिन्द्राय दीयसे तदा मरुत्वते सहाया-मरुतोयस्यसन्ति तस्मै इन्द्राय मत्सरोमदकरश्च भव । कीदृशः विश्वा विश्वानि सर्वाणि व्याप्तानि वा धनानि ओजसा आत्मीयेन बलेन युक्तःसन् स्तोतृभ्यस्तानि दधानः प्रयच्छन् त्वं मादयिता भवेति समन्वयः ॥ १० ॥

॥ इति सप्तमस्य द्वितीये द्वितीयोवर्गः ॥ २ ॥

अथैकादशी—

तंत्वाधर्तारमोण्योऽ३ःपवमानस्वर्दृशम् । हिन्वेवाजेषुवाजिनम् ॥ ११ ॥

तम् । त्वा । धर्तारम् । ओण्योः । पवमान ।
स्वःऽदृशम् । हिन्वे । वाजेषु । वाजिनम् ॥ ११ ॥

हे पवमान पूयमान पुनान वा हे सोम ओण्योः । द्यावापृथिवीनामैतत् । तयोर्धर्तारंधारकं अतएव स्वर्दृशं स्वर्गस्य सूर्यस्य वा द्रष्टारं सर्वैर्देवैर्द्रष्टव्यं वाजिनं बलवन्तं पूर्वोक्तगुणसिद्धं त्वा त्वां वाजेषु संग्रामेषु हिन्वे प्रेरयामि । यद्वा वाजेषु अन्नेषु विषयेषु हिनोमि अन्नादिकं प्रयच्छेत्यर्थः ॥ ११ ॥

अथ द्वादशी—

अयाचित्तोविपानयाहरिःपवस्वधारया । युजंवाजेषुचोदय ॥ १२ ॥

अया । चित्तः । विपा । अनया । हरिः । पवस्व ।
धारया । युजम् । वाजेषु । चोदय ॥ १२ ॥

हे पवमान अया अयपयगतौ कर्मार्थमितस्ततोगच्छन्तीभिरनया विपा विपप्रेरणे । हवींषि अग्नौ प्रेरयन्तीति विपोंगुलयः एकवचनं छान्दसं प्रत्येकविवक्षया वा । एताभिर्मदीयाभिरंगुलिभिश्चित्तो ज्ञातः निर्गतोभिषुतोहरिर्हरितवर्णस्त्वं धारया सन्ततया पवस्व द्रोणकशं ग्रहां-

आगच्छ त्वं। किंच युजं सखायमिन्द्रं वाजेषु संग्रामेषु चोदय प्रेरय। यदा अस्माभिरिन्द्रार्थं सोमोदीयते तदा तत्पानेन हृष्टःसन् शत्रून् हन्तीत्यर्थः ॥१२॥

अथ त्रयोदशी—

**आनंइन्दोमहीमिषंपवंस्वविश्वदंर्शतः। अस्मभ्यंसोमगातुवित् ॥ १३॥**

**आ। नः। इन्दो इति। महीम्। इषम्। पवस्व।**
**विश्वऽदर्शतः। अस्मभ्यम्। सोम। गातुऽवित् ॥ १३॥**

हे इन्दो क्षरणशील दीपनशील हे सोम विश्वदर्शतः विश्वैः सर्वैः दर्शनीयः यद्वा विश्वं सर्वं वस्तुजातं दृश्यते ज्ञाप्यतेनेनेति सविश्वस्य प्रकाशकइत्यर्थः। तादृशस्त्वं महीमिषं महत्प्रभूतमन्नं नोस्मभ्यमापवस्व आगमय प्रयच्छेत्यर्थः। किंच हे सोमाभिषूयमाण पवमान अस्मभ्यं गातुवित् स्वर्गमार्गस्य लंभयिता ज्ञापयिता भव ॥ १३॥

अथ चतुर्दशी—

**आकलशाअनूषतेन्दोधाराभिरोजंसा। एन्द्रंस्यपीतयेविश ॥१४॥**

**आ। कलशाः। अनूषत। इन्दो इति। धाराभिः।**
**ओजसा। आ। इन्द्रस्य। पीतये। विश ॥ १४॥**

हे इन्दो क्षरणशील सोम ओजसा बलेन युक्तस्य तव धाराभिर्निरन्तराभिः सहिताः कलशाः प्रयोगबाहुल्यापेक्षमेतद्बहुवचनं। द्रोणकलशाः अनूषत स्तोतृभिराभिमुख्येन स्तूयन्ते। सोमाभिषवकालेहि ऋत्विजः स्तुवन्तिखलु। ततस्त्वमिन्द्रस्य पीतये पानाय आविश ग्रहांश्चमसांश्च प्रविश ॥ १४॥

अथ पञ्चदशी—

**यस्यंतेमद्यंरसंतीव्रंदुहन्त्यद्रिभिः। सपंवस्वाभिमातिहा ॥१५॥ २॥**

**यस्य। ते। मद्यम्। रसम्। तीव्रम्। दुहन्ति। अद्रिऽभिः।**
**सः। पवस्व। अभिमातिऽहा ॥ १५॥ २॥**

हे सोम यस्य ते तव मद्यं मदकरं तीव्रं क्षिप्रं मदकारिणं रसं अद्रिभिर्ग्रावभिरध्वर्वादयो-दुहन्ति अभिषुण्वन्ति । सतादृशस्त्वं अभिमातिहा अभितोमातिरभिमानं येषां ते शत्रवः पापरूपा-णां हन्ता सन् पवस्व सर्वतोगच्छ । येभिषुण्वन्ति ते पापरहिताः सुकृतिनोभवन्तीत्यर्थः ॥ १५॥

॥ इति सप्तमस्य द्वितीये तृतीयोवर्गः ॥ ३ ॥

अथ षोडशी–

राजामेधाभिरीयतेपवमानोमनावधि । अन्तरिक्षेणयातवे ॥ १६ ॥

राजा । मेधाभिः । ईयते । पवमानः । मनौ ।
अधि । अन्तरिक्षेण । यातवे ॥ १६ ॥

मनौ मनुष्ये यागं कुर्वाणे सति । यद्वा मनावधि मनुर्मन्तव्योयज्ञः तस्मिन् पवमानः पूयमानः पुनानोवा राजा राजशब्देन सोमोभिधीयते । सोमंराजानमक्रीणन्नित्यादिषु दृष्टत्वात् । सराजा मेधाभिः स्तुतिभिः सह ईयते गच्छति । किमर्थं अन्तरिक्षेण आकाशमार्गेण द्रोणकलशं प्रति यातवे यातुं द्रोणाभिगमनकालेहि स्तोतृभिः स्तूयते खलु ॥ १६ ॥

अथ सप्तदशी–

आनइन्दोशतग्विनंगवांपोषंस्वश्व्यम् । वहाभगत्तिमूतये ॥ १७ ॥

आ । नः । इन्दो इति । शतऽग्विनम् । गवाम् । पोषम् ।
सुऽअश्व्यम् । वह । भगत्तिम् । ऊतये ॥ १७ ॥

हे इन्दो पात्रेषु क्षरणशील दीपनशीलवा हे सोम शतग्विनं शतसहस्रसंख्याभिर्गोभिर्युक्तं गवां पोषं गवादीनां पुष्टिवर्धनं स्वश्व्यं शोभनाश्वसंगसहितं भगत्तिं भगदत्तिं भजनीयधनदानं च ऊतये रक्षणाय नोस्माकं आवह प्रापय गवादींश्च । तेषांच वृद्धिं प्रयच्छेत्यर्थः ॥ १७ ॥

अथाष्टादशी–

आनःसोमसहोजुवोरूपंनवर्चसेभर । सुष्वाणोदेववीतये ॥ १८ ॥

आ । नः । सोम । सहः । जुवः । रूपम् । न ।
वर्चसे । भर । सुस्वानः । देवऽवीतये ॥ १८ ॥

१ ऐ० ब्रा० १. २७.

हे सोम देववीतये देवपानाय देवानां कामाय वा सुष्वाणः अभिषूयमाणः अभिषुतो वा भव । त्वं सहः शत्र्वभिभवनसमर्थं बलं जुवः जुरितिगत्यर्थः शत्रून्प्रति शीघ्रगमनंच यद्वा सर्वतोगमनशीलं । किंच नेतिचार्थे । वर्चसे वर्चदीप्तौ दीप्त्यै सर्वत्र प्रकाशनाय रूपंच नोस्मभ्यं आभराहर प्रयच्छ ॥ १८ ॥

अथैकोनविंशी—

**अर्षासोमद्युमत्तमोभिद्रोणानिरोरुवत् । सीदञ्छ्येनोनयोनिमा॥१९॥**

**अर्ष । सोम । द्युमत्ऽतमः । अभि । द्रोणानि ।**
**रोरुवत् । सीदन् । श्येनः । न । योनिम् । आ ॥ १९ ॥**

हे सोम अभिषूयमाण पवमान द्युमत्तमः अतिशयेन दीप्तिमांस्त्वं द्रोणानि प्रयोगबाहुल्यापेक्षमेतद्बहुवचनं द्रोणानभिलक्षीकृत्य रोरुवत् पुनःपुनर्भृशं वा शब्दंकुर्वन् अर्ष तानागच्छ दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्नधारया द्रोणकलशे पतन् शब्दंकरोति खलु । तत्रदृष्टान्तः—श्येनोन यथाआसीदन् सर्वतोगच्छन् श्येनः शंसनीयगतिः पक्षी योनिं स्वस्थानं कुलायंप्रति भृशंशब्दायमानःसन् आगच्छति तद्वत् ॥ १९ ॥

अथ विंशी—

**अप्साइन्द्रायवायवेवरुणायमरुभ्द्यः । सोमोअर्षतिविष्णवे॥२०॥४॥**

**अप्साः । इन्द्राय । वायवे । वरुणाय ।**
**मरुत्ऽभ्यः । सोमः । अर्षति । विष्णवे ॥ २० ॥ ४ ॥**

अप्साः वसतीवरीनामधेयानामपां संभक्ता । वनषणसंभक्तौ जनसनेतिविट् विड्वनोरित्यात्वं । तादृशः सोमः अर्षति द्रोणकलशमागच्छति । किमर्थं इन्द्राय सर्वदेवानां प्रथमएव इन्द्रः सोमं पिबति तस्मात्पूर्वमेवाभिहितः तस्मै वायवे तत्सहायायच ऐन्द्रवायवे हि इन्द्रस्यानन्तरं वायुः सोमं पिबति तस्मात्तदनु वायुरुक्तः तस्मैच वरुणाय मरुद्भ्योमितं शब्दं कुर्वद्भ्यः एतन्नामकेभ्योदेवेभ्यः विष्णवे सर्वजगद्व्यापिने विष्णवेच एतेषां पातुं सोमः स्रवतीत्यर्थः॥ २० ॥

॥ इति सप्तमस्य द्वितीये चतुर्थोवर्गः ॥ ४ ॥

अथैकविंशी–

इषंतोकायनोदधदस्मभ्यंसोमविश्वतः । आपवस्वसहस्रिणम् ॥२१॥

इषम् । तोकाय । नः । दधत् । अस्मभ्यम् । सोम ।
विश्वतः । आ । पवस्व । सहस्रिणम् ॥ २१ ॥

हे सोम त्वं नोस्माकं तोकाय पुत्राय इषमन्नं दधद्विदधत् प्रयच्छन् सहस्रिणं सहस्र-संख्याकं धनं विश्वतः सर्वतोदिक्षु अस्मभ्यं वा पवस्व आप्रयच्छ अस्मभ्यं पुत्रायच अन्न-धनादिकं प्रयच्छेत्यर्थः ॥ २१ ॥

अथ द्वाविंशी–

येसोमासःपरावतियेअर्वावतिसुन्विरे । येवादःशर्यणावति ॥ २२॥

ये । सोमासः । पराऽवति । ये । अर्वाऽवति ।
सुन्विरे । ये । वा । अदः । शर्यणाऽवति ॥ २२ ॥

एतदादिभ्यामृग्भ्यामिन्द्रार्थं सर्वत्र सोमाभिषवोस्तीत्याह । ये सोमासः सोमाः परावति विप्रकृष्टेतिदूरे देशे ये वा अर्वावति अन्तिके देशे इन्द्रार्थं सुन्विरे अभिषूयन्ते अभ्यषूयन्त । येवा शर्यणावति कुरुक्षेत्रस्य जघनार्धे शर्यणावत्संज्ञकं मधुरसयुक्तं सोमवत्सरोस्ति अदः अस्मिन्सरसि सुरसाः येसोमा इन्द्रायाभिषूयन्ते तेस्मकमभिमतफलं प्रयच्छन्तु । इतिवक्ष्यमाणेन संबन्धः ॥ २२ ॥

अथ त्रयोविंशी–

यआर्जीकेषुकृत्वसुयेमध्येपस्त्यानाम् । येवाजनेषुपञ्चसु ॥ २३ ॥

ये । आर्जीकेषु । कृत्वऽसु । ये । मध्ये । पस्त्यानाम् ।
ये । वा । जनेषु । पञ्चऽसु ॥ २३ ॥

येवा सोमा आर्जीकेषु ऋजीकानामदूरभवाः आर्जीकादेशाः तेषु तथा कृत्वसु कृत्वा-नइति देशाभिधानं तेषु कर्मवत्सु देशेषु किंच पस्त्यानां सरस्वत्यादीनां नदीनां मध्ये समीपेच

ये सोमाः अभिषूयन्ते । ऋषयोवैसरस्वत्यांसत्रमासतेत्यादिषु नदीतीरे यज्ञकरणस्य श्रवणात् । किंच जनेषु पंचसु निषादपंचमाश्चत्वारोवर्णाः पंचजनाः तेषुच येवा सोमा अभिषुतास्तेसोमाः अस्माकमभिमतं प्रयच्छन्त्वित्युत्तरेणान्वयः ॥ २३ ॥

अथ चतुर्विंशी–

तेनोवृष्टिंदिवस्परिपवंन्तामासुवीर्यम् । सुवानादेवासइन्दवः ॥२४॥

ते । नः । वृष्टिम् । दिवः । परि । पवन्ताम् । आ ।
सुऽवीर्यम् । सुवानाः । देवासः । इन्दवः ॥ २४ ॥

सुवानास्तत्र चाभिषूयमाणा देवासः देवाः दीपनशीलाः स्तुत्यावा इन्दवः ग्रहेषु चमसेषुच क्षरन्तः तेसोमाः नोस्माकं दिवस्परि । परिशब्दः पंचमीद्योतकः । अन्तरिक्षादादित्याद्वा वृष्टिं । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिरिति वृष्टिकारणत्वात् । किंच सुवीर्यं शोभनवीर्योपेतं पुत्रंच धनादिकंवा आपवन्तां प्रापयन्तु । यजमानः सोमेनाभिमतफलानि प्राप्नोति खलु ॥ २४ ॥

अथ पंचविंशी–

पवतेहर्यतोहरिर्गृणानोजमदग्निना । हिन्वानोगोरधित्वचि ॥ २५॥५॥

पवते । हर्यतः । हरिः । गृणानः । जमत्ऽअग्निना ।
हिन्वानः । गोः । अधि । त्वचि ॥ २५ ॥ ५ ॥

हर्यतः देवान् कामयमानोहरिर्हरितवर्णः किंच गोस्त्वच्यधि आनडुहे चर्मणि हिन्वानः प्रेर्यमाणः ससोमः जमदग्निना मंत्रद्रष्ट्रा ऋषिणा गृणानः स्तूयमानःसन् पवते दशापवित्रेण पूतोभवति यद्वा पात्राण्यभिगच्छति ॥ २५ ॥

॥ इति सप्तमस्य द्वितीये पंचमोवर्गः ॥ ५ ॥

अथ षड्विंशी–

प्रशुक्रासोवयोजुवोहिन्वानासोनसप्तयः । श्रीणानाअप्सुमृंजत ॥२६॥

---

1 ऐ० ब्रा० २. १९.

प्र । शुक्रासः । वयःऽजुवः । हिन्वानासः । न ।
सप्तयः । श्रीणानाः । अप्ऽसु । मृञ्जत ॥ २६ ॥

शुक्रासः शुक्रा दीप्यमाना वयोजुवः अन्नंप्रेरयन्तः यद्यदपेक्ष्य देवेभ्यः सोमं प्रयच्छन्ति तत्तदपेक्षितं सोमोददाति । ते सोमाः श्रीणानाः दधिक्षीरादिभिः श्रीयमाणाःसन्तः अप्सु वसतीवरीष्वेकधनासुच । मृंजत ऋत्विग्भिः प्रमृज्यन्ते शोध्यन्ते । तत्रदृष्टान्तः—हिन्वानासोन सप्तयः अश्वंनामैतत् । यथाश्वाः हिन्वानासो हिन्वानाः सादिभिः प्रेर्यमाणाः सन्तः अप्सु तैरेव प्रशोधिताभवन्ति तद्वत् ॥ २६ ॥

अथ सप्तविंशी—

तंत्वांसुतेष्वाभुवोंहिन्विरेदेवतांतये । सपंवस्वानयांरुचा ॥२७॥

तम् । त्वा । सुतेषु । आऽभुवः । हिन्विरे ।
देवऽतातये । सः । पवस्व । अनया । रुचा ॥ २७ ॥

अथ प्रत्यक्षस्तुतिः हे सोम आभुवः कर्मकरणार्थं समन्ताद्भवन्तीति आभुव . ऋत्विजः ते सुतेषु सुतः अभिषुतः सोमः तद्वत्सु यज्ञेषु देवतातये । सर्वदेवात्तातिलितिस्वार्थिकस्तातिल् । इन्द्रादिदेवेभ्यः तं तादृशं प्रसिद्धं त्वा त्वां हिन्विरे ग्रावभिः प्रेरयन्ति अभिषुण्वन्तीत्यर्थः । ततः सः अभिषुतः सत्वं अनया रुचा दीप्यमानधारया द्रोणकलशं प्रति पवस्व आगच्छ । पवतिर्गतिकर्मा । यद्वा अनया मदीयया रुचा स्तुत्या सह कलशमागच्छ । कलशाभिगमनकाले हि सोमं स्तुवन्ति ॥ २७ ॥

अथाष्टाविंशी—

आतेदक्षंमयोभुवंवह्निमद्यावृणीमहे । पान्तमापुरुस्पृहम् ॥ २८ ॥

आ । ते । दक्षम् । मयःऽभुवम् । वह्निम् । अद्य ।
वृणीमहे । पान्तम् । आ । पुरुऽस्पृहम् ॥ २८ ॥

हे सोम यष्टारोवयं ते तव स्वभूतं दक्षं बलमद्यास्मिन्यागदिने आभिमुख्येन आवृणीमहे संभजामहे । कीदृशं मयोभुवं सुखस्य भावुकं वह्निं वनादीनां प्रापकं पान्तं शत्रुभ्योरक्षकं पुरुस्पृहं बहुभिः स्पृहणीयं काम्यमानं बलमिति ॥ २८ ॥

अथैकोनत्रिंशी–

**आमन्द्रमावरेण्यमाविप्रमामनीषिणम् । पान्तमापुरुस्पृहम् ॥ २९ ॥**

**आ । मन्द्रम् । आ । वरेण्यम् । आ । विप्रम् । आ ।**
**मनीषिणम् । पान्तम् । आ । पुरुऽस्पृहम् ॥ २९ ॥**

हे सोम मन्द्रं मदकरं स्तुत्यंवा त्वामावृणीमहे वरेण्यं सर्वैर्वरणीयं संभजनीयंच । किंच विप्रं मेधाविनं त्वां तथा मनीषिणं मनसईषा मनीषा तद्वन्तं स्तुतिमन्तंवा त्वामावृणीमहे । प्रत्येकं विशेषणापेक्षया आइत्युपसर्गः कृतः । किंच पान्तं सर्वेषां रक्षकं पुरुस्पृहं बहुभिः स्पृहणीयं च त्वां संभजामहे ॥ २९ ॥

अथ त्रिंशी–

**आरयिमासुचेतुनमासुक्रतोतनूष्वा । पान्तमापुरुस्पृहम् ॥ ३० ॥ ६ ॥**

**आ । रयिम् । आ । सुऽचेतुनम् । आ । सुक्रतो इति**
**सुऽक्रतो । तनूषु । आ । पान्तम् । आ । पुरुऽस्पृहम् ॥ ३० ॥ ६ ॥**

हे सुक्रतो शोभनयज्ञ सोम त्वदीयं रयिं धनं वयमावृणीमहे । किंच सुचेतुनं चितीसंज्ञाने । भावे औणादिकउनन्प्रत्ययः । सुज्ञानंच तनूषु अस्मत्पुत्रेषुच धनं सुज्ञानंच त्वमाविधेहि । यद्वा पुत्रार्थं वयमावृणीमहे । तथा पान्तं सर्वस्य रक्षकं पुरुस्पृहं बहुभिर्यष्टृभिः काम्यमानं त्वां संभजामहे ॥ ३० ॥

॥ इति सप्तमस्य द्वितीये षष्ठोवर्गः ॥ ६ ॥

पवस्वेति त्रिंशदृचं षष्ठं सूक्तं । अत्रानुक्रम्यते–पवस्व शतंवैखानसाः अष्टादश्यनुष्टुप् परास्तिस्रआग्नेय्यइति । शतसंख्याका वैखानसाख्याः संहताऋषयः त्वंसोमसूरइत्येषानुष्टुप् शिष्टागायत्र्यः अग्नआयूंष्याद्याः तिस्रः पवमानविशिष्टाग्निदेवताकाः अन्यासां पवमानःसोमोदेवता गतःसूक्तविनियोगः ।

तत्र प्रथमा–

**पवस्वविश्वचर्षणेभिविश्वानिकाव्या । सखासखिभ्यईड्यः ॥ १ ॥**

पवस्व । विश्वऽचर्षणे । अभि । विश्वानि ।
काव्या । सखा । सखिऽभ्यः । ईड्यः ॥ १ ॥

हे विश्वचर्षणे सर्वव्यापित्वेन सर्वस्यद्रष्टः हे सोम सखा स्तुत्यः स्तोतृयष्टृत्वलक्षणेन संबन्धेन सखिभूतस्त्वं ईड्यः स्तोतव्यःसन् सखिभ्यः हविःप्रदानेनोपकारकत्वान्मित्रभूतेभ्योस्मभ्यं विश्वानि सर्वाणि काव्या कवेःकर्माणि काव्यानि । ब्राह्मणादित्वात् ष्यञ् । सर्वाणि स्तोत्राण्यभिलक्षीकृत्यपवस्वागच्छ ॥ १ ॥

अथ द्वितीया—

ताभ्यांविश्वस्यराजसियेपवमानधामनी।प्रतीचीसोमतस्थतुः॥२॥

ताभ्याम् । विश्वस्य । राजसि । ये इति । पवमान ।
धामनी इति । प्रतीची इति । सोम । तस्थतुः ॥ २ ॥

हे पवमान दशापवित्रेण पूयमानपुनान वा हे सोम ये धामनी पूर्वपक्षापरपक्षयोर्लतारूपस्य सोमस्य तव एकैकपर्णवृद्धिह्रासाभ्यां तव स्वभूतौ पूर्वादिपक्षौ । यद्वा ये धामनी नामनी अंशुसोमात्मके अपि प्रतीची त्वदभिमुखंगच्छन्तौ गच्छतीवा पक्षौ नामनी तस्थतुः उपजग्मतुः । ताभ्यां त्वं विश्वस्य सर्वस्य लोकस्य राजसि स्वामीभवसि । पूर्वादिपक्षाभ्यां सर्वलोकस्योपनायकत्वात्तस्य स्वामीभवसि । पृथिव्यां अंशुनाम्ना मनुष्याणां सर्वेषां अभीप्सितदानेन तस्यलोकस्य द्युलोके देवेभ्यः स्वसुधामयकलादानेन तेषां प्रीणयिता भवति । देवाःखलु सोमस्य एकैकवृद्धिह्रासाभ्यां कलाः पिबन्ति ॥ २ ॥

अथ तृतीया—

परिधामानियानितेत्वंसोमासिविश्वतः । पवमानऋतुभिःकवे॥३॥

परि । धामानि । यानि । ते । त्वम् । सोम । असि ।
विश्वतः । पवमान । ऋतुऽभिः । कवे ॥ ३ ॥

हे सोम यस्मात्ते त्वदीयानि धामानि तेजांसि परितोवर्तते । अतएव हे पवमान पूयमान हे कवे क्रान्तकर्मन् हे सोम त्वमृतुभिः वसन्तादिकालविशेषैः सह विश्वतः सर्वतोसि भवसि ।

अहोरात्रौ यत्रयत्र व्याप्तौ तत्रतत्र वसन्तादिकालोपाधिकः सोमस्तिष्ठति तयोस्तदधीनत्वादि-त्यर्थः ॥ ३ ॥

अथ चतुर्थी–

**पवस्वजनयन्निषोभिविश्वानिवार्या । सखासखिभ्यऊतये ॥ ४ ॥**

**पवस्व । जनयन् । इषः । अभि । विश्वानि ।**

**वार्या । सखा । सखिऽभ्यः । ऊतये ॥ ४ ॥**

हे सोम सखा सखिभूतस्त्वं विश्वानि सर्वाणि वार्या वरणीयानि अस्मद्गतानि स्तोत्राण्यभिलक्षीकृत्य सखिभ्योऽस्मभ्यं ऊतये रक्षणाय जीवनाय इषोऽन्नानि जनयन् प्रयच्छन् पवस्वागच्छ । पवतिर्गतिकर्मा ॥ ४ ॥

अथ पंचमी–

**तवशुक्रासोअर्चयोदिवस्पृष्ठेवितन्वते । पवित्रंसोमधामभिः॥५॥७॥**

**तव । शुक्रासः । अर्चयः । दिवः । पृष्ठे । वि ।**

**तन्वते । पवित्रम् । सोम । धामऽभिः ॥ ५ ॥ ७ ॥**

हे सोम शुक्रासः सर्वत्रज्वलनशीलाः धामभिस्तेजोभिः सहितस्य तव स्वभूता अर्चयः अर्चनीया रश्मयः दिवः द्योतमानस्यादित्यस्य द्युलोकस्यवा पृष्ठे अधरभागे पृथिव्यामित्यर्थः । पवित्रं पवमानसाधनमुदकं वितन्वते विशेषेण तन्वन्ति विस्तारयन्ति सर्वत्रकुर्वन्तीत्यर्थः ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये सप्तमोवर्गः ॥ ७ ॥

अथ षष्ठी–

**तवेमेसप्तसिन्धवःप्रशिषंसोमसिस्रते । तुभ्यंधावन्तिधेनवः ॥ ६ ॥**

**तव । इमे । सप्त । सिन्धवः । प्रऽशिषम् । सोम ।**

**सिस्रते । तुभ्यम् । धावन्ति । धेनवः ॥ ६ ॥**

वृष्टिकर्तृत्वप्रसंगादाह हे सोम इमे इमास्त्वयासृष्टाः सप्त सप्तसंख्याकाः सिन्धवः स्यन्दमाना गंगाद्यानद्यः यद्वा सप्त सर्पणशीलानद्यः तव प्रशिषं प्रशासनमाज्ञामभिसिस्रते अनुसरन्ति त्वदाज्ञामनुसृत्य समुद्रं गच्छन्तीत्यर्थः। किंच धेनवः नवप्रसूतिकाः देवानां हविःप्रदानेन प्रीणयित्र्योगावः तुभ्यं त्वदर्थमेव आशिरं प्रयच्छामइति धावंति आगच्छन्ति ॥ ६ ॥

अथ सप्तमी—

प्रसोमयाहिधारयासुतइन्द्रायमत्सरः। दधानोअक्षितिश्रवः ॥ ७॥

प्र। सोम। याहि। धारया। सुतः। इन्द्राय।
मत्सरः। दधानः। अक्षिति। श्रवः ॥ ७ ॥

हे सोम अभिषूयमाण देव मत्सरः इन्द्रस्यमदकरस्त्वं सुतोस्माभिरभिषुतःसन इन्द्राय इन्द्रार्थं दशापवित्रान्निर्गतया सन्ततया त्वदीयया धारया द्रोणकलशं प्रयाहि प्रकर्षेणप्राप्नुहि। यद्वा हे सोम सुतोभिषुतस्त्वं इन्द्राय मत्सरः मादयितृतमःसन् धारया अग्नौ स्वाहाकारेण पात्रात्पतन्त्या धारया सह त्वमिन्द्रमुपयाहि। कीदृशः अक्षिति अक्षीणं श्रवः। श्रवइत्यन्ननाम। दधानोस्मभ्यं प्रयच्छन् प्रयाहीति ॥ ७ ॥

अथाष्टमी—

समुत्वाधीभिरस्वरन्हिन्वतीःसप्तजामयः। विप्रमाजाविवस्वतः॥८॥

सम्। ऊम् इति। त्वा। धीभिः। अस्वरन्। हिन्वतीः।
सप्त। जामयः। विप्रम्। आजा। विवस्वतः ॥ ८ ॥

हे सोम हिन्वतीः लिंगव्यत्ययः हिन्वन्तः स्तुतीः प्रेरयन्तः सप्त सप्तसंख्याका जामयः एकस्मिन्यज्ञे कर्मकरणेन परस्परं बन्धुभूता होतृप्रभृतयः सप्तहोत्रकाः विवस्वतः देवानां हविःप्रदानेन परिचरणवतोयजमानस्य आजा आजौ अजन्ति गच्छन्ति ऋत्विजोत्रेति आजिर्यज्ञः तस्मिन् विप्रं मेधाविनं पवमानं त्वा त्वामेव धीभिः स्तुतिभिः समस्वरन् अशब्दयन् अस्तुवन्। यद्वा हिन्वतीः गच्छन्त्यः सप्तजामयोगंगाद्याः सप्तनद्यः धीभिर्वर्णलोपश्छान्दसः धीतिभिरंगुलिभिर्विप्रं त्वां समस्वरन् प्रेरयन्ति वसतीवरीभिरेकधनाभिश्च परिशोधनार्थं प्रेरयन्तीति ॥८॥

अथ नवमी—

**मृजन्तित्वासमग्रुवोव्येंजीरावधिष्वणिं । रेभोयदज्यसेवने ॥९॥**

**मृजन्ति । त्वा । सम । अग्रुवः । अव्ये । जीरौ ।**
**अधि । स्वनि । रेभः । यत् । अज्यसे । वने ॥ ९ ॥**

हे सोम अग्रुवः अंगुलिनामैतत् अजन्ति प्रक्षिपन्ति हवींष्यग्नाविति । यद्वा अगेर्गत्यर्थस्य कर्मकरणार्थं इतस्ततोगच्छन्तीति । अग्रुवोंगुल्योस्मदीया जीरौ पापानामभिभावुके क्षिप्रं कृते वा स्वनि अधि अधिकं शब्दायमाने अव्ये अविवालेन कृते पवित्रे त्वा त्वां सदा संमृजन्ति सम्यक् शोधयन्ति । यद्यदा रेभो रेभृशब्दे उदकमध्ये प्रक्षेपेण शब्दायमानस्त्वं वने वननीये वसतीवर्याख्ये उदके अज्यसे अक्तः सिक्तोभवसि तदा मृजन्तीत्यन्वयः ॥ ९ ॥

अथ दशमी—

**पवमानस्यतेकवेवाजिन्त्सर्गाअसृक्षत । अर्वन्तोनश्रवस्यवः॥१०॥८॥**

**पवमानस्य । ते । कवे । वाजिन् । सर्गाः ।**
**असृक्षत । अर्वन्तः । न । श्रवस्यवः ॥ १० ॥ ८ ॥**

मार्जनप्रसंगमाह हे कवे क्रान्तप्रज्ञ हे वाजिन्नन्नवन् सोम पवमानस्य दशापवित्रेण पूयमानस्य ते तव सर्गाः सृज्यन्तइतिसर्गाः धाराः । कीदृशाः श्रवस्यवः छन्दसिपरेच्छायांक्यच् । यष्टॄणामन्नं कामयमानास्त्वदीयाःधाराः असृक्षत सृजन्ति निर्गच्छन्तीत्यर्थः । तत्रदृष्टान्तः—अर्वन्तोन यथा अश्वाः मन्दुरातोनिर्गच्छन्ति तद्वत् पवित्रान्निसरन्तीत्यर्थः । प्रयोगापेक्षं चात्र धाराबाहुल्यम् ॥ १० ॥

॥ इति सप्तमस्य द्वितीये अष्टमोवर्गः ॥ ८ ॥

अथैकादशी—

**अच्छाकोशंमधुश्चुतमसृग्रंवारेअव्यये । अवावशन्तधीतयः॥११॥**

**अच्छ । कोशम् । मधुऽश्चुतम् । असृग्रम् ।**
**वारे । अव्यये । अवावशन्त । धीतयः ॥ ११ ॥**

धारानिर्गमनप्रसंगादभिधीयते मधुश्चुतं मधुररसस्य च्यावयितारं क्षारयितारं कोशं द्रोणकलशं अच्छ अभिलक्ष्य अव्यये अविमये अविस्वभूते वा वारे वाले दशापवित्रे असृग्रं सोमा ऋत्विग्भिः सृज्यन्ते। सृजेः कर्मणि तिङांतिङोभवन्तीति झेरमादेशः। किंच धीतयः अंगुलिनामैतत् धयन्ति पिबन्ति आभिरिति अस्मदीयाअंगुलयः अवावशन्त तान् सोमान् पुनःपुनः मार्जनार्थं कामयन्ते ॥ ११ ॥

अथ द्वादशी–

अच्छासमुद्रमिन्दवोस्तंगावोनधेनवः । अग्मन्नृतस्ययोनिमा ॥१२॥

अच्छ । समुद्रम् । इन्दवः । अस्तम् । गावः । न ।
धेनवः । अग्मन् । ऋतस्य । योनिम् । आ ॥ १२ ॥

इन्दवः क्षरन्तः सोमाः समुद्रं सोमानामेकत्रैव संगमनस्थानं द्रोणकलशमभिगच्छन्ति । तत्रदृष्टान्तः–धेनवः पयःप्रदानेन जनानां प्रीणयित्र्योनवप्रसूतिकागावः अस्तं गृहं यथाभिगच्छन्ति तद्वत् । किंच ते सोमाः ऋतस्य सत्यभूतस्य यज्ञस्य योनिं स्थानमाग्मन् आभिमुख्येन गच्छन्ति । गमेर्लुङि सिचोलुकि उपधालोपः ॥ १२ ॥

अथ त्रयोदशी–

प्रणइन्दोमहेरणआपोअर्षन्तिसिन्धवः । यद्गोभिर्वासयिष्यसे ॥ १३ ॥

प्र नः । इन्दो इति । महे । रणे । आपः । अर्षन्ति ।
सिन्धवः । यत् । गोभिः । वासयिष्यसे ॥ १३ ॥

हे इन्दो क्षरन् सोम नोस्माकं स्वभूताय रणे रणाय रणन्ति स्तुवन्ति देवानत्रेति रणोयज्ञः । अधिकरणे अप् ङ्यर्थइति नभवति सर्वविधीनां छन्दसि विकल्पितत्वात् । महे महते रणाय यज्ञाय तदर्थे सिंधवः स्यन्दमाना आपः वसतीवर्याख्याः सोमसेकार्थं अर्षन्ति प्रगच्छन्ति । यद्यदा त्वं गोभिः गव्यैः दधिक्षीरादिभिः वासयिष्यसे आच्छाद्यसे मिश्रितोभवसि तदा आपोगच्छन्तीति ॥ १३ ॥

अथ चतुर्दशी–

**अस्यंतेसख्येवयमियंक्षन्तस्त्वोतयः। इन्दोसखित्वमुंश्मसि॥ १४॥**

**अस्यं। ते। सख्ये। वयम्। इयंक्षन्तः। त्वाऽऊंतयः।**
**इन्दो इति। सखिऽत्वम्। उश्मसि॥ १४॥**

हे इन्दो पवमान इयक्षन्तो यष्टुमिच्छन्तो पूजयितुमिच्छन्तोवा अस्य प्रसिद्धस्य ते तव सख्ये सखिकर्मणि स्थितावयं त्वोतयः त्वदायत्तरक्षणाःसन्तः सखित्वं सखिभावमेव उश्मसि उश्मः कामयामहे॥ १४॥

अथ पंचदशी–

**आपंवस्वगविंष्टयेमहेसोमनृचक्षंसे। एन्द्रंस्यजठरेंविश॥ १५॥ ९॥**

**आ। पवस्व। गोऽइंष्टये। महे। सोम। नृऽचक्षंसे।**
**आ। इन्द्रस्य। जठरें। विश॥ १५॥ ९॥**

हे सोम पवमान गविष्टये अंगिरसां गवामन्वेष्ट्रे महे महते नृचक्षसे नृणां मनुष्याणां द्रष्ट्रे कर्मनेतॄणां फलं पश्यतेवा इन्द्राय आपवस्व पात्रेषु दशापवित्रेण पूतो भव। किंच इन्द्रस्य जठरे उदरे उदरभूते द्रोणकलशे वा आविश प्रविश॥ १५॥

॥ इति सप्तमस्य द्वितीये नवमोवर्गः॥ ९॥

अथ षोडशी–

**महाँअसिसोमज्येष्ठंउग्राणांमिन्दओजिंष्ठः। युध्वासञ्छश्वंज्जिगेथ॥ १६॥**

**महान्। असि। सोम। ज्येष्ठः। उग्राणांम्। इन्दो इति।**
**ओजिष्ठः। युध्वा। सन्। शश्वंत्। जिगेथ॥ १६॥**

हे सोम त्वं महानसि यतस्त्वं देवानां प्रीणयितासि खलु त्वं ज्येष्ठः प्रशस्यतमोभवसि। किंच हे इंदो पवमान त्वमुग्राणामुद्गूर्णबलानामपि ओजस्वितमोभवसि त्वं युध्वासन् शत्रुभिः सह युद्धं कुर्वन् एव शश्वत् सर्वदा जिगेथ तान् तेषां धनानिच जितवानसि। जिजये थलि सन्लिटोर्जेरिति अभ्यासादुत्तरस्य कवर्गादेशः॥ १६॥

अथ सप्तदशी–

यउ॒ग्रेभ्य॑श्चि॒दोजी॑या॒ञ्छूरे॑भ्यश्चि॒च्छूर॑तरः ।
भू॒रि॒दाभ्य॑श्चि॒न्मंही॑यान् ॥ १७ ॥

यः । उ॒ग्रेभ्यः॑ । चि॒त् । ओजी॑यान् । शूरे॑भ्यः । चि॒त् ।
शूर॑ऽतरः । भू॒रि॒ऽदाभ्यः॑ । चि॒त् । मंही॑यान् ॥ १७ ॥

यः सोमः उग्रेभ्यश्चित् उद्गूर्णेभ्योबलवद्भ्योपि ओजीयान् ओजस्वितमः । किंच यः शूरेभ्यश्चित् वीरेभ्योपि शूरतरः अत्यन्तसमर्थोभवति । तथा यः सोमः भूरिदाभ्यः डुदाञ् दाने आतोमनिन्निति विच् । बहुधनानां दातृभ्योपि मंहीयान् दातृतमोभवति । तं त्वां वृणीमहे इति उत्तरेणसंबन्धः ॥ १७ ॥

अथाष्टादशी–

त्वंसो॑मसू॒र॒एष॑स्तो॒कस्य॑सा॒ता॒त॒नूना॑म् ।
वृ॒णी॒म॒हेस॒ख्याय॑वृ॒णी॒म॒हे॒युज्या॑य ॥ १८ ॥

त्वम् । सो॒म॒ । सूरः॑ । आ । इषः॑ । तो॒कस्य॑ । सा॒ता । त॒नूना॑म् ।
वृ॒णी॒म॒हे । स॒ख्याय॑ । वृ॒णी॒म॒हे । युज्या॑य ॥ १८ ॥

हे सोम सूरः सुवीर्यः यद्वा सर्वस्य यागादिकर्मणि प्रेरकस्त्वं इषोन्नानि अस्माकमाधेहि । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । किंच त्वं तोकस्य पुत्रस्य तनूनां तन्वन्ति विस्तारयन्ति कुलमिति तन्वः पौत्राः । तेषांच सातौ दाता भव । षणुदाने जनसनेतिविट् जनसनेत्यात्वं । वयं तं त्वां सख्याय सखिभावाय कर्मणेवा वृणीमहे संभजामहे । तथा युज्याय युज् सहायः तस्य भावे कर्मणि वा ष्यञ् संज्ञापूर्वकस्य विधेरनित्यत्वादवृद्धिः । शत्रुबाधादिलक्षणसहायायच वयं वृणीमहे ॥ १८ ॥

अग्निहोत्रे पूर्वस्यामाहुतौ हुतायामुपोषितेन यजमानेन प्रतिदिवसं प्रतिसंवत्सरंवा अनेन तृचेनाग्निरुपस्थेयः । सूत्रितंच–आग्नेयीभिश्चाग्नआयूंषिपवसइति तिसृभिः संवत्सरे संवत्सरइति । चौलादिकर्मसु चतस्रआज्याहुतयोहोतव्यास्तत्रैवतिस्रः । सूत्रितंच–तेषांपुरस्ताच्चतस्रआज्या-

हुतीर्जुहुयादग्नआयूंषिपवसइति तिसृभिरिति । आधाने पवमानेष्टौ अग्नेःपवमानस्याग्नआयूंषी- त्येषानुवाक्या अग्नेपवस्वेत्येषा याज्या। सूत्रितंच—प्रथमायांअग्निरग्निःपवमानोग्नआयूंषिपवसेग्ने- पवस्वस्वपाइति। पुनराधेये द्वितीयाज्यभागस्याग्नआयूंषीत्येषा वैकल्पिकानुवाक्या सूत्रितंच— नित्यंपूर्वमनुब्राह्मणिनोग्नआयूंषिपवसइत्युत्तरमिति ।

सैषा सूक्ते एकोनविंशी—

अग्नआयूंषिपवसआसुवोर्जमिषंचनः । आरेबाधस्वदुच्छुनाम् ॥१९॥

अग्ने । आयूंषि । पवसे । आ । सुव । ऊर्जम् । इषम् ।
च । नः । आरे । बाधस्व । दुच्छुनाम् ॥ १९ ॥

हे अग्ने पवमानरूप त्वमस्माकं आयूंषि जीवनानि पवसे रक्षसि । नोस्माकमूर्जमन्नरसं इषमन्नंवा सुव आभिमुख्येन प्रेरय । किंच दुच्छुनां रक्षोनामैतत् रक्षांसि आरे अस्मत्तोदूरे एव बाधस्व संपीडय ॥ १९ ॥

अथ विंशी—

अग्निर्ऋषिःपवमानःपाञ्चजन्यःपुरोहितः ।
तमीमहेमहागयम् ॥ २० ॥ १० ॥

अग्निः । ऋषिः । पवमानः । पाञ्चऽजन्यः । पुरःऽहितः ।
तम् । ईमहे । महाऽगयम् ॥ २० ॥ १० ॥

पाञ्चजन्यः निषादपंचमाश्चत्वारोवर्णाः पंचजनाः । यद्वा गन्धर्वाः पितरो देवा असुरा र- क्षांसीत्येते पंचजनाः । अथवा देवमनुष्यागंधर्वाप्सरसः सर्पाः पितरइति ब्राह्मणेभिहिताः पंच- जनाः । गभीरात्र्ञ्यइत्यत्र बहिर्देवपंचजनेभ्यइति वक्तव्यमिति वचनात् भवार्थेञ्यः प्रत्ययः तेषां तत्तदभीष्टदानेन स्वभूतऋषिः सर्वद्रष्टा पवमानस्तद्रूपोग्निः पुरोहितः कर्मार्थमृत्विग्भिः पुरो- निहीतः तंपूर्वोक्तलक्षणं महागयं महद्भिर्देवादिभिरपि गीर्भिर्गातव्यं महान्तिप्रभूतानि यज्ञगृहा- णि वा यस्य सतथोक्तः तं पवमानगुणविशिष्टमग्निमीमहे धनादीनि याचामहे ॥ २० ॥

॥ इति सप्तमस्य द्वितीये दशमोवर्गः ॥ १० ॥

अथैकविंशी—

**अग्नेपवंस्वस्वपाअस्मेवर्चःसुवीर्यम् । दधंद्रयिंमयिपोषंम् ॥२१॥**

**अग्ने । पवंस्व । सुऽअपाः । अस्मे इति । वर्चः । सुऽवीर्यम् ।**

**दधंत् । रयिम् । मयि । पोषंम् ॥ २१ ॥**

हे अग्ने स्वपाः । सोमंनसीत्युत्तरपदाद्युदात्तत्वं । शोभनकर्मा त्वं अस्मे अस्मासु सुवीर्यं शोभनवीर्योपेतं वर्चः वर्चदीप्तौ तेजः पवस्व आगमय । तथा भवान् रयिं धनं पुत्रं वा पोषं । भावेकर्मणि वा घञ् । गवां पुष्टिं यद्वा गवादिकं मयि भवान् दधत् दधातु करोत्वित्यर्थः । दधातेर्लेटि अडागमोघोर्लोपोलेटिवेत्याकारलोपः ॥ २१ ॥

अथ द्वाविंशी—

**पवंमानोअतिस्रिधोभ्यंर्षतिसुष्टुतिम् । सूरोनविश्वदंर्शतः ॥२२॥**

**पवंमानः । अति । स्रिधंः । अभि । अर्षति । सुऽस्तुतिम् ।**

**सूरंः । न । विश्वऽदंर्शतः ॥ २२ ॥**

पवमानः सोमः अतिस्रिधः हिंसकान् शत्रून् अतिक्रम्य गच्छति । तथा सुष्टुतिं स्तोतॄणां शोभनां स्तुतिं अभ्यर्षति आभिमुख्येन गच्छति । ऋषीगतौ तौदादिकः बहुलंछन्दसीतिशप् गुणः । किंच सूरोन सूर्यइव विश्वदर्शतः सर्वस्य द्रष्टा सर्वैर्वा दर्शनीयोभवति ॥ २२ ॥

अथ त्रयोविंशी—

**सर्मर्मृजानआयुभिःप्रयंस्वान्प्रयंसेहितः । इन्दुरत्योविचक्षणः॥२३॥**

**सः । मर्मृजानः । आयुऽभिः । प्रयंस्वान् । प्रयंसे । हितः ।**

**इन्दुः । अत्यः । विऽचक्षणः ॥ २३ ॥**

आयुभिः कर्मनेतृभिर्मनुष्यैः मर्मृजानः पुनःपुनर्मृज्यमानः शोध्यमानः सइन्दुः ससोमः अत्योदेवान् सततं गन्ता भवति । कीदृशः प्रयस्वान् प्रीणनशीलान्नवान् । यद्वा स्तोतृभ्योदेयत्वेनान्नयुक्तः अतएव प्रयसे हवीरूपायान्नाय हितः विचक्षणः सर्वस्यप्रदर्शनकारी सर्वस्यविद्रष्टा वा सोमः देवानभिगन्ता भवति । चक्षिङ्व्यक्तायांवाचि अनुदात्तेतश्चहलादेरितियुच् ॥२३॥

अथ चतुर्विंशी—

**पवमान ऋतं बृहच्छुक्रं ज्योतिरजीजनत्। कृष्णा तमांसि जंघनत्॥२४॥**

**पवमानः। ऋतम्। बृहत्। शुक्रम्। ज्योतिः। अजीजनत्।**
**कृष्णा। तमांसि। जंघनत्॥ २४॥**

पवमानः ऋतं सत्यं यथार्थभूतं बृहत् प्रभूतं सर्वदेशेषुव्यापकं शुक्रं दीप्यमानं श्वेतवर्णं ज्योतिस्तेजः अजीजनत् द्युलोके उदपादयत्। किंकुर्वन् कृष्णा कृष्णवर्णानि तमांसि जंघनत् भृशं विनाशयन्। हन्तेर्यङ्लुकि शतरि रूपं अभ्यस्तानामादिरित्याद्युदात्तत्वं॥ २४॥

अथ पञ्चविंशी—

**पवमानस्य जंघ्नतो हरेश्चन्द्रा असृक्षत। जीरा अजिरशोचिषः॥२५॥११॥**

**पवमानस्य। जंघ्नतः। हरेः। चन्द्राः। असृक्षत।**
**जीराः। अजिरऽशोचिषः॥ २५॥ ११॥**

जङ्घ्नतः पुनःपुनस्तमांसि विनाशयतो हरेर्हरितवर्णस्य अजिरशोचिषः सर्वत्रगमनशील-तेजसः पवमानस्य सोमस्य चन्द्राः चदिआह्लादने देवानामाह्लादयित्र्यः जीराःक्षिप्रं क्षरणशीलाधाराः असृक्षत सृजन्ति पवित्रान्निर्गच्छन्तीत्यर्थः॥ २५॥

॥ इति सप्तमस्य द्वितीये एकादशोवर्गः॥ ११॥

अथ षड्विंशी—

**पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः। हरिश्चन्द्रो मरुद्गणः॥२६॥**

**पवमानः। रथिऽतमः। शुभ्रेभिः। शुभ्रशःऽतमः।**
**हरिऽचन्द्रः। मरुत्ऽगणः॥ २६॥**

पवमानोदेवः रथीतमः अतिशयेन रथवान्। ईद्रथिनइतीकारः। तथा शुभ्रेभिः शोभायुक्तेभ्यस्तेजोभ्योपि शुभ्रशस्तमः अत्यन्तदीप्यमानश्च यद्वा निर्मलेभ्योपि निर्मलतमयशोयुक्तः हरिश्चन्द्रः ह्रस्वाच्चन्द्रोत्तरपदइति सांहितिकःसुट् हरितवर्णदीप्तिः हरितधारावान् वा मरुद्गणः

मरुतोयस्य गणः सहायभूताः सतथोक्तः तादृशः सर्वान् लोकान् स्वरश्मिभिः स्वदीप्तिभिः व्यश्न-वत् व्याप्नोत्वित्युत्तरेण संबन्धः ॥ २६ ॥

अथ सप्तविंशी—

पवमानोव्यश्नवद्रश्मिभिर्वाजसातमः । दधत्स्तोत्रेसुवीर्यम् ॥ २७ ॥

पवमानः । वि । अश्नवत् । रश्मिऽभिः । वाजऽसातमः ।
दधत् । स्तोत्रे । सुऽवीर्यम् ॥ २७ ॥

पवमानः सोमः रश्मिभिः स्वदीप्तिभिः व्यश्नवत् सर्वंजगद्व्याप्नोतु। कीदृशः वाजसातमः अतिशयेन अन्नस्यदाता बलस्य संभक्तावा तथा स्तोत्रे पवमानः स्तोत्रंकुर्वते मनवे सुवीर्यं सुवीर्योपेतं पुत्रं धनंवा दधत् विदधत् प्रयच्छन् व्याप्नोतु अश्नोतेर्लेट्यडागमः ॥ २७ ॥

अथाष्टाविंशी—

प्रसुवानइन्दुरक्षाःपवित्रमत्यव्ययम् । पुनानइन्दुरिन्द्रमा ॥ २८ ॥

प्र । सुवानः । इन्दुः । अक्षारिति । पवित्रम् । अति ।
अव्ययम् । पुनानः । इन्दुः । इन्द्रम् । आ ॥ २८ ॥

सुवानः अभिषूयमाणः इन्दुः सोमः अव्ययमविमयं ऊर्णास्तुकेननिर्मितं दशापवित्रमतीत्य प्राक्षाः कलशं प्रकर्षेण क्षरति । क्षरतेर्लुङि तिपि सिचि छान्दसइडागमाभावःअतोल्रान्तस्येतिवृद्धिः रात्सस्येतिसिचोलोपः रेफान्तंस्पष्टयितुमितिकारः बहुलंछन्दसीतीडभावः हल्ङ्यादिना तिलोपः अनित्यमागमशासनमितिसिचइआ ततः पुनानः पवित्रेण शुद्धः इन्दुः सोमः इन्द्रमाविशति । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ २८ ॥

अथैकोनत्रिंशी—

एषसोमोअधित्वचिगवांक्रीळत्यद्रिभिः । इन्द्रंमदायजोहुवत् ॥ २९ ॥

एषः । सोमः । अधि । त्वचि । गवाम् । क्रीळति ।
अद्रिऽभिः । इन्द्रम् । मदाय । जोहुवत् ॥ २९ ॥

एषः अंशुरूपः सोमः गवां त्वचि आनडुहे चर्मणि अधिशब्दउपर्यर्थद्योतकः चर्मण्युपरि अद्रिभिर्ग्रावभिःसह क्रीळति अभिषवाय संक्रीडते । इन्द्रं परमेश्वरं मदाय मदार्थं जोहुवत् आह्वानं कृतवान् । एतेन तत्काले इन्द्रविषयां स्तुतिं करोतीत्यवगम्यते ॥ २९ ॥

अथ त्रिंशी—

**यस्य॑ते द्यु॒म्नव॒त्पय॒ः पव॑मा॒नाभृ॑तं दि॒वः । तेन॑ नो मृळ जी॒वसे॑ ॥ ३० ॥ १२ ॥**

**यस्य॑ । ते॒ । द्यु॒म्नऽव॑त् । पय॑ः । पव॑मान । आऽभृ॑तम् ।**
**दि॒वः । तेन॑ । न॒ः । मृ॒ळ । जी॒वसे॑ ॥ ३० ॥ १२ ॥**

हे पवमान पूयमान हे सोम दिवो द्युलोकात् आभृतं श्येनरूपया गायत्र्या आहृतं द्युम्नवदन्नवद्यशोयुक्तंवा पयः सोमलक्षणमन्नं यस्य ते तव स्वभूतं विद्यते तस्मात् त्वं तेनान्नेन नोस्मान् जीवसे चिरजीवनाय मृळ मृळय सुखय ॥ ३० ॥

॥ इति सप्तमस्य द्वितीये द्वादशोवर्गः ॥ १२ ॥

त्वंसोमासीति द्वात्रिंशदृचं सप्तमं सूक्तं आद्यतृचस्य बार्हस्पत्योभरद्वाजऋषिः । द्वितीयस्य मारीचः कश्यपः । तृतीयस्य राहूगणोगोतमः । चतुर्थस्य भौमोत्रिः । पंचमस्य गाथिनोविश्वामित्रः । षष्ठस्य भार्गवोजमदग्निः । सप्तमस्यमैत्रावरुणिर्वसिष्ठः । सूक्तशेषस्यांगिरसः पवित्रः वसिष्ठोवा उभौ वा समुदितावृषी । पवस्वसोममन्दयन्नित्याद्यास्तिस्रोनित्यद्विपदागायत्र्यः । अवितानोअजाश्वइत्याद्यास्तिस्रः पवमानपूषदेवत्याः पवमानसोमदेवताका वा । यत्तेपवित्रमर्चिषीत्याद्याःपंचर्चः पवमानाग्निदेवत्याः आसां पंचानांमध्ये उभाभ्यांदेवसवितरिति तृतीयापवमानसवितृदेवताकावा । चतुर्थी त्रिभिष्ट्वंदेवसवितरित्येषा विकल्पेनपवमानाग्निसवितृदेवताका । पुनन्तुमामित्येषा विकल्पेनवैश्वदेवी यःपावमानीरध्येतीत्यादिके द्वे पवमानमण्डलाध्येतृस्तुतिप्रतिपादिके अतः सैव देवता शिष्टाःसर्वाःपवमानसोमदेवताकाः । तथाचानुक्रम्यते—त्वंसोमासिद्वात्रिंशद्भरद्वाजः कश्यपोगोतमोत्रिर्विश्वामित्रोजमदग्निर्वसिष्ठइतितृचाः सप्तऋषयः शेषे पवित्रोवसिष्ठोवोभौवा पवस्वसोमतिस्रोनित्यद्विपदागायत्र्यो वितानस्तिस्रःपौष्ण्योवा यत्तेपवित्रंपंचाग्नेय्यः साविज्यग्निसावित्रीवैश्वदेवीवाप्नामंत्याः त्रिंशीपुरउष्णिक् सप्तविंश्यनुष्टुप् अन्त्ये च ते पावमान्यध्येतृस्तुतीति । गतःसूक्तविनियोगः ।

तत्र प्रथमा—

त्वंसोमासिधारयुर्मन्द्रओजिष्ठोअध्वरे । पवस्वमंहयद्रयिः ॥ १ ॥

त्वम् । सोम । असि । धारयुः । मन्द्रः । ओजिष्ठः ।
अध्वरे । पवस्व । मंहयत्ऽरयिः ॥ १ ॥

हे सोमाभिषूयमाण पवमान मन्द्रः मोदयितृतमः ओजिष्ठः ओजस्वितमस्त्वं अध्वरे हिंसारहितेस्मदीयेयज्ञे धारयुः अभिषवणधाराकामोसि भवसि । अतस्त्वं मंहयद्रयिः स्तोतृभ्यः प्रदीयमानधनः सन् पवस्व द्रोणकलशे ग्रहादिषु दशापवित्रेण पूतोभव । यद्वा धारयुः तद्वदर्थेभाष्यतइति मत्वर्थीयोयुः सः हे सोम त्वं धारावानिव । ततः पवस्वेति संबन्धः ॥ १ ॥

अथ द्वितीया—

त्वंसुतोनृमादनोदधन्वान्मत्सरिन्तमः । इन्द्रायसूरिरन्धसा ॥ २ ॥

त्वम् । सुतः । नृऽमादनः । दधन्वान् । मत्सरिन्ऽतमः ।
इन्द्राय । सूरिः । अन्धसा २ ॥

हे सोम नृमादनः नृणां कर्मणांनेतृणामृत्विजां मादयिता अतएव दधन्वान् तेभ्योधनानि धारयन् प्रयच्छन् । यद्वा यज्ञस्य धारकः सूरिः प्राज्ञः सुतोस्माभिरभिषुतस्त्वं अन्धसा हवीरूपणान्नेन सहेन्द्राय मत्सरिन्तमः तस्यातिशयेन मदकारी भव । नाद्धस्येति नकारः ॥ २ ॥

अथ तृतीया—

त्वंसुष्वाणोअद्रिभिरभ्यर्षकनिक्रदत् । द्युमन्तंशुष्मंमुत्तमम् ॥ ३ ॥

त्वम् । सुस्वानः । अद्रिऽभिः । अभि । अर्ष । कनिक्रदत् ।
द्युऽमन्तम् । शुष्मम् । उत्ऽतमम् ॥ ३ ॥

हे पवमानसोम अद्रिभिर्ग्रावभिः सुष्वाणः सुन्वानः अभिषूयमाणस्त्वं कनिक्रदत् भृशं शब्दंकुर्वन् अभ्यर्ष कलशं पात्राणिचाभिगच्छ । तथा द्युमन्तं दीप्तियुक्तं उत्तमं शुष्मं शत्रूणां शोषकं बलंच प्रापुहि । यद्वा एकवाक्यतया योजनीयः । स्तूयमानस्त्वं बलमभिगच्छेति । क-

दिक्रदिआह्वाने। क्रदेर्यङ्लुकि तलोपः। अभ्यासस्यनिगागमश्च दाधर्तिदर्धर्तीतिसूत्रेण सर्वं निपात्यते। तस्माच्छतृप्रत्ययः। अभ्यस्तानामादिरितिस्वरः॥ ३॥

अथ चतुर्थी—

इन्दुर्हिन्वानोअर्षतितिरोवाराण्यव्यया। हरिर्वाजमचिक्रदत्॥४॥

इन्दुः। हिन्वानः। अर्षति। तिरः। वाराणि। अव्यया।
हरिः। वाजम्। अचिक्रदत्॥ ४॥

हिन्वानः ग्रावभिः प्रेर्यमाणोभिषूयमाण इन्दुः सोमः अव्यया अविमयानि अवीनां स्वभूतानि वाराणि वालानि पवित्राणीत्यर्थः। तानि तिरः तिरस्कृत्य व्यवधाय अर्षति गच्छति प्रभूतं निर्गच्छतीत्यर्थः। सोमं हरिर्हरितवर्णः सोमः वाजमन्नं अचिक्रदत् शब्दयति। त्वया सह इन्द्रमहमाह्वयामीत्यर्थः॥ ४॥

अथ पञ्चमी—

इन्दोव्यव्यमर्षसिविश्रवांसिविसौभगा। विवाजान्त्सोमगोमतः॥५॥१३॥

इन्दो इति। वि। अव्यम्। अर्षसि। वि। श्रवांसि। वि।
सौभगा। वि। वाजान्। सोम। गोऽमतः॥ ५॥ १३॥

हे इन्दो सोम अव्यं अविवालेभवं पवित्रं व्यर्षसि विविधं धाराभिर्गच्छसि। किंच श्रवांसि हवीरूपाण्यन्नानिच विगच्छसि। तथा सौभगा सुभगस्य भावः सौभगं सुभगशब्दः उद्गात्रादिषु पठ्यते। तस्य उत्तरपदवृद्धिर्नेष्यते। सौभगानि धनानि विविधं प्राप्नोति। तथा हे सोम गोमतः पशुमन्ति वाजान् बलानिच विविधंप्राप्नुहि तानि सर्वाण्यस्माकं प्रापयेत्यभिप्रायः॥ ५॥

॥ इति सप्तमस्य द्वितीये त्रयोदशोवर्गः॥ १३॥

अथ षष्ठी—

आनइन्दोशतग्विनंरयिंगोमन्तमश्विनम्। भरासोमसहस्रिणम्॥ ६॥

आ । नः । इन्दो इति । शतऽग्विनम् । रयिम् । गोऽमन्तम् ।
अश्विनम् । भर । सोम । सहस्रिणम् ॥ ६ ॥

हे इन्दो पात्रेषु क्षरन् हे सोम नोस्मभ्यमाभर संपादय देहि । किमिति उच्यते शतग्विनं शतंगावोयस्य सशतगुः तद्वन्तं गोमन्तं प्रशस्तपशुमन्तं अश्विनं अश्वयुक्तं सहस्रिणं सहस्रसंख्याकं रयिं धनं पुत्रं वा आभर ॥ ६ ॥

अथ सप्तमी—

पवमानासइन्दवस्तिरःपवित्रमाशवः । इन्द्रंयामेभिराशत ॥ ७ ॥

पवमानासः । इन्दवः । तिरः । पवित्रम् । आशवः ।
इन्द्रम् । यामेभिः । आशत ॥ ७ ॥

पवित्रमूर्णास्तुकेननिर्मितं दशापवित्रं तिरस्कृत्य व्यवधायकं कृत्वा पवमानासः कलशं प्रति बहुधाराः क्षरन्तः आशवः क्षिप्रं मदकारिणश्चमसादीन् व्याप्नुवन्तोवा इन्दवः सोमाः यामेभिः स्वीयैर्गमनैः इन्द्रमाशत व्याप्नुवन्ति ॥ ७ ॥

अथाष्टमी—

ककुहःसोम्योरसइन्दुरिन्द्रायपूर्व्यः । आयुःपवतआयवे ॥ ८ ॥

ककुहः । सोम्यः । रसः । इन्दुः । इन्द्राय । पूर्व्यः ।
आयुः । पवते । आयवे ॥ ८ ॥

ककुहः सोमः सर्वकर्मकारयितृत्वेन सर्वेषां समुच्छ्रितः अतिशयितोभवति । सोयं पूर्व्यः पूर्वैः कृतोभिषुतः पूर्वं प्रातःकाले कृतोवा आयुः इन्द्रं प्रति गंता इन्दुः पात्रेषु क्षरन् सोम्यः मयेचेति यः प्रत्ययः सोममयोरसः आयवे सर्वत्रगन्त्रे इन्द्राय पवते कलशेषु पवित्रेण पूतोभवति । यद्वा इन्द्रार्थमभिगच्छति । पवतिर्गतिकर्मा ॥ ८ ॥

अथ नवमी—

हिन्वन्तिसूरमुस्रयःपवमानंमधुश्चुतम् । अभिगिरासमस्वरन् ॥ ९ ॥

हिन्वन्ति । सूरम् । उस्रयः । पवमानम् । मधुऽश्चुतम् ।
अभि । गिरा । सम् । अस्वरन् ॥ ९ ॥

उस्रयः कर्मकरणार्थं इतस्ततोगच्छन्त्योंगुलयः मधुश्चुतं मदकरस्य रसस्य च्यावयितारं सूरं सुवीर्यं सर्वस्य यागादिकर्मणिप्रेरकं पवमानं सोमं हिन्वन्ति अभिषवार्थं संप्रेरयन्ति । ततः स्तोतारोगिरा स्तुत्या तमेनमभिसमस्वरन् सम्यगभिष्टुवन्ति ॥ ९ ॥

अथ दशमी—

अविता नो अजाश्वः पूषा यामनियामनि । आभक्षत्कन्यासुनः ॥ १० ॥ १४ ॥

अविता । नः । अजऽअश्वः । पूषा । यामनिऽयामनि ।
आ । भक्षत् । कन्यासु । नः ॥ १० ॥ १४ ॥

अजाश्वः अजाःपूष्ण इत्युक्तत्वादजाएवअश्वा वाहनानि यस्य सतथोक्तः सपूषा एतन्नामकोदेवः यामनियामनि सर्वस्मिन् गमने भौमदिव्यलक्षणे नोस्माकं अविता पालयिता भवतु । किंच कन्यासु कमनीयासु अभिमतासु स्त्रीषु नोस्मानाभक्षत् आभजतां अस्माकं कन्याः प्रयच्छत्वित्यर्थः । भजेःसेवार्थाल्लेटि सिपि अडागमे रूपं । यद्वा अजाश्वःअजवाहनः पूषा सर्वस्य पोषयिता सोमः यामनियामनि याते प्राप्यते देवैरत्रेति यामोयज्ञः तत्र यज्ञे नोस्माकं अविता रक्षिता भवतु । तथा कन्यासु स्त्रीष्विष्टासु अस्मानाप्रापयतु ॥ १० ॥

॥ इति सप्तमस्य द्वितीये चतुर्दशोवर्गः ॥ १४ ॥

अथैकादशी—

अयं सोमः कपर्दिने घृतं न पवते मधु । आभक्षत्कन्यासुनः ॥ ११ ॥

अयम् । सोमः । कपर्दिने । घृतम् । न । पवते । मधु ।
आ । भक्षत् । कन्यासु । नः ॥ ११ ॥

कपर्दिने कल्याणमुकुटवते सोमाय पूष्णेवा तदर्थमयं मादयिताभिषुतोस्मदीयः सोमः पवते च गच्छति तं प्राप्नोति । तत्रदृष्टान्तः—घृतंन मधु मादकं हवीरूपं घृतं यथा सोमं पूषणं वा गच्छति तद्वत् । ततः सकन्यास्वस्मानागमयत् ॥ ११ ॥

अथ द्वादशी—

**अयंतआघृणेसुतोघृतंनपवतेशुचि । आभक्षत्कन्यासुनः ॥ १२॥**

अयम् । ते । आघृणे । सुतः । घृतम् । न । पवते । शुचि ।
आ । भक्षत् । कन्यासु । नः ॥ १२ ॥

हे आघृणे घृक्षरणदीप्त्योः सर्वतोदीप्यमान पवमान पूषन् वा ते त्वदर्थं सुतोभिषुतोयं सोमः पवते त्वदभिमुखमागच्छति । यद्वा त्वदर्थं पात्रेषु पवित्रेण पूतो भवति क्षरतिवा । तत्रदृष्टान्तः— घृतंन शुचि शुद्धं घृतं यथा त्वां प्राप्नोति तद्वत् ततस्त्वमभिलषितानि अस्माकं देहीति ॥ १२ ॥

अथ त्रयोदशी—

**वाचोजन्तुःकवीनांपवस्वसोमधारया । देवेषुरत्नधाअसि ॥ १३॥**

वाचः । जन्तुः । कवीनाम् । पवस्व । सोम । धारया ।
देवेषु । रत्नऽधाः । असि ॥ १३ ॥

हे सोम कवीनां क्रान्तप्रज्ञानां स्तोतॄणां वाचोजन्तुः स्तुतेर्जनयिता । यद्वा मेधाविनां मध्ये वाचं जनयसि । अत्यन्तं वाग्मी त्वं धारया पवस्व द्रोणकलशं ग्रहांश्च प्राप्नुहि । ततः इन्द्रादिदेवेषु रत्नधाः रमणशीलस्य सोमस्य निधातासि भवसि । अथवा देवेषु स्तोत्रकारिषु कर्मकुर्वाणेषु वास्मासु रत्नस्य कनकादेर्दाता भवसि ॥ १३ ॥

ग्रावस्तोत्रेगाणगारिमितेनाभिरूपकरणे कलशेषु सोमे आसिच्यमाने वक्तव्यस्य तृचस्य आकलशेष्वित्यादिके द्वितीयातृतीये । सूत्रितंच—आकलशेषुधावतिश्येनोवर्मविगाहतेइति ।

तयोः प्रथमा सूक्ते चतुर्दशी—

**आकलशेषुधावतिश्येनोवर्मविगाहते । अभिद्रोणाकनिक्रदत् ॥ १४॥**

आ । कलशेषु । धावति । श्येनः । वर्म । वि । गाहते ।
अभि । द्रोणा । कनिक्रदत् ॥ १४ ॥

ऋत्विग्भिरभिषिच्यमानः कश्चित्सोमः कलशेषु सोमाधारेषु द्रोणकलशेषु आधावति सर्वतोगच्छति श्येनः लुप्तोपममेतत् । यथा श्येनोवर्म वरणीयं कुलायं विगाहते प्रविशति तद्वत् ।

कनिक्रदत् अत्यन्तं शब्दं कुर्वन् द्रोणा द्रोणकलशानभिगच्छतिच । यद्वा द्रोणाधवनीयपूतभृत् संज्ञकाभिप्रायं एकः सिच्यमानः सोमोद्रोणंप्रति शब्दायमानः पश्चात् प्रथमंगच्छति । ततः पात्रद्वयमिति ॥ १४ ॥

अथ पंचदशी–

**परिप्रसोमतेरसोसर्जिकलशेसुतः । श्येनोनतक्तोअर्षति ॥१५॥१५॥**

**परि । प्र । सोम । ते । रसः । असर्जि । कलशे । सुतः ।**
**श्येनः । न । तक्तः । अर्षति ॥ १५ ॥ १५ ॥**

हे सोम कलशे द्रोणाभिधाने सुतोभिषुतस्ते तव रसः परिप्रासर्जि परिप्रसृज्यते परितोग्रहेषु चमसेषु च प्रसृष्टोविभक्तोभवति । कथमिव श्येनोनतक्तः तकिर्गतिकर्मा गमनशीलः श्येनः पक्षीयथा सर्वत्रार्षति गच्छति तद्वत् यद्वा यथा श्येनः सर्वतोगन्ता तद्वत्तक्तः पात्रेषु गतः सोमः अर्षति इन्द्रादिदेवानागच्छत् । अर्तेर्लेटि सिपि रूपं । पूर्वम्नृषीगतावित्यस्मात् लटि शपि रूपम् ॥ १५ ॥

॥ इति सप्तमस्य द्वितीये पंचदशोवर्गः ॥ १५ ॥

अथ षोडशी–

**पवस्वसोममन्दयन्निन्द्रायमधुमत्तमः ॥ १६ ॥**
**पवस्व । सोम । मन्दयन् । इन्द्राय । मधुमत्ऽतमः ॥ १६ ॥**

हे सोम मधुमत्तमः अतिशयेनमधुररसवांस्त्वं मन्दयन् मादयिता भवन् । यद्वा इन्द्राय क्रियाग्रहणंकर्तव्यमिति संप्रदानं इन्द्रं मोदमानःसन् पवस्व इन्द्रार्थमागच्छ ॥ १६ ॥

अथ सप्तदशी–

**असृग्रन्देववीतयेवाजयन्तोरथाइव ॥ १७ ॥**
**असृग्रन् । देवऽवीतये । वाजऽयन्तः । रथाःऽइव ॥ १७ ॥**

एतेभिषुताः सोमाः वाजयन्तः सन्तः देववीतये देवानांपानाय असृग्रन् विसृज्यंते ऋत्विग्भिः प्रदीयन्ते । तत्रदृष्टान्तः–रथाइव वाजयन्तः शत्रुधनानि बलानिवा स्वामिनइच्छन्तो रथा देववीतये देवानांगमनाय यथा विसृज्यन्ते तद्वत् ॥ १७ ॥

अथाष्टादशी—

तेसुतासोमदिन्तंमाःशुक्रावायुमंसृक्षत ॥ १८ ॥

ते । सुतासः । मदिन्ऽतंमाः । शुक्राः । वायुम् ।
असृक्षत ॥ १८ ॥

मदिन्तमः अतिशयेन मादयितारः शुक्राः दीप्यमानाः सुतासः अभिषुतास्तेसोमाः वायुं शब्दमसृक्षतासृजन्नकार्षुः । यद्वा वायुमेवसोमपानार्थमसृजन् सोमेषु सत्सु वायुस्तत्पानार्थमागच्छति ॥ १८ ॥

अथैकोनविंशी—

ग्राव्णांतुन्नोअभिष्टुंतःपवित्रंसोमगच्छसि । दधंत्स्तोत्रेसुवीर्यम् ॥ १९ ॥

ग्राव्णा । तुन्नः । अभिऽस्तुतः । पवित्रम् । सोम । गच्छसि ।
दधत् । स्तोत्रे । सुऽवीर्यम् ॥ १९ ॥

हे सोम त्वं ग्राव्णातुन्नः अभिपीडितोभिषुतस्त्वं स्तोतृभिरभिष्टुतः सन् पवित्रं गच्छसि प्राप्नोषि। किंकुर्वन् स्तोत्रे स्तोत्रकारिणे जनाय सुवीर्यं शोभनवीर्योपेतं धनादिकं दधत् विधदत् प्रयच्छन् ॥ १९ ॥

अथ विंशी—

एषतुन्नोअभिष्टुंतःपवित्रमतिगाहते । रक्षोहावारमव्ययंम् ॥ २० ॥ १६ ॥

एषः । तुन्नः । अभिऽस्तुतः । पवित्रम् । अति । गाहते ।
रक्षःऽहा । वारम् । अव्ययम् ॥ २० ॥ १६ ॥

तुन्नः तुदव्यथने ग्रावभिरभिव्यथितः सुतः अतएव सर्वैरभिष्टुतः एषोस्मदीयः सोमोरक्षोहा कर्मविघ्नकारिणां रक्षसां पापानांच हन्ता भवत् ।अव्ययमविमयं अव्यवयवभूतं वारं वालं तेनकृतं पवित्रं दशापवित्रमति अतिक्रम्य गाहते द्रोणकलशं प्रविशति ॥ २० ॥

॥ इति सप्तमस्य द्वितीये षोडशोवर्गः ॥ १६ ॥

अथैकविंशी–

**यदन्तियच्चंदूरकेभयंविन्दतिमामिह । पवमानवितज्जहि ॥२१॥**

यत् । अन्ति । यत् । च । दूरके । भयम् । विन्दति । माम् ।
इह । पवमान । वि । तत् । जहि ॥ २१ ॥

हे पवमान पूयमान पुनान वा सोम यद्भयमन्ति अन्तिके तथा यच्च भयं दुरके अतिदूरे देशे अथवा इहास्मिन् प्रदेशेपि भयं मां विन्दति लभते प्राप्नोति । तद्भयं त्वं विजहि विशेषेण नाशय । यद्वा इहेति यज्ञोयंलोकोवा अस्मिन् क्रियमाणेयज्ञे अस्मिन् लोकेवा यद्भयं व्याप्नोति तन्नाशयेत्यर्थः ॥ २१ ॥

अथ द्वाविंशी–

**पवमानःसोअद्यनःपवित्रेणविचर्षणिः । यःपोतासपुनातुनः ॥ २२ ॥**

पवमानः । सः । अद्य । नः । पवित्रेण । विऽचर्षणिः ।
यः । पोता । सः । पुनातु । नः ॥ २२ ॥

सतादृशः प्रसिद्धोविचर्षणिः सर्वस्यद्रष्टा पवमानः अद्येदानीमेव पवित्रेण पापशोधकेन तेजसा यःपोता स्वयं पवित्रःसन् सनोस्मान् पुनातु पापरहितान् करोतु ॥ २२ ॥

पवित्रेष्ट्यां प्रथमाज्यभागस्य याज्या यत्तेपवित्रमित्येषा । सूत्रितंच–यत्तेपवित्रमर्चिष्या-कलशेषुधावतीति पवित्रइत्येकइति ।

सैषा सूक्ते त्रयोविंशी–

**यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा । ब्रह्मतेनपुनीहिनः ॥ २३ ॥**

यत् । ते । पवित्रम् । अर्चिषि । अग्ने । विऽततम् ।
अन्तः । आ । ब्रह्म । तेन । पुनीहि । नः ॥ २३ ॥

हे पवमानगुणविशिष्टाग्ने ते त्वदीयं पवित्रं शोधकं यत्स्वतेजः आर्चिषि सौरवैद्युतादि-तेजसि अन्तर्मध्ये आविततं आविस्तृतं विद्यते । यद्वा हे अग्ने ते तव स्वभूतेर्चिषि तेजसि

अन्तर्मध्ये यत्पवित्रं शुद्ध्युत्पादकं सामर्थ्यमस्ति तेन तादृशेन तेजसा नोस्माकं ब्रह्म पुत्रादिवर्धनकारि शरीरं पुनीहि पापरहितं पूतं कुरु ॥ २३ ॥

अथ चतुर्विंशी—

यत्तेपवित्रमर्चिवदग्नेतेनपुनीहिनः । ब्रह्मसवैःपुनीहिनः ॥ २४ ॥

यत् । ते । पवित्रम् । अर्चिऽवत् । अग्ने । तेन । पुनीहि ।
नः । ब्रह्मऽसवैः । पुनीहि । नः ॥ २४ ॥

हे अग्ने पवित्रं शोधकमर्चिवदर्चिष्मत् छन्दसीरइतिमतुपोवत्वं सौरादितेजोयुक्तं ते त्वदीयं यत्तेजः विद्यते तेन स्वीयेनैव तेजसा नोस्मान् पुनीहि पूतान् कुरु । किंच ब्रह्मसवैः ब्राह्मणकर्तृकसोमाभिषवैः यद्वा ब्रह्म सोमः तस्याभिषवैः नोस्मान् पुनीहि ॥ २४ ॥

अथ पंचविंशी—

उभाभ्यांदेवसवितःपवित्रेणसवेनच । मांपुनीहिविश्वतः ॥२५॥१७॥

उभाभ्याम् । देव । सवितरिति । पवित्रेण । सवेन ।
च । माम् । पुनीहि । विश्वतः ॥ २५ ॥ १७ ॥

हे सवितः सर्वस्य प्रेरक हे देव द्योतमान सोम त्वं पवित्रेण पापशोधकेन त्वदीयेन तेजसा सवेन सोमाभिषवेनच एताभ्यामुभाभ्यां विश्वतः सर्वतोमां पुनीहि पूतं कुरु॥ २५ ॥

॥ इति सप्तमस्य द्वितीये सप्तदशोवर्गः ॥ १७ ॥

अथ षड्विंशी—

त्रिभिष्ट्वंदेवसवितर्वर्षिष्ठैःसोमधामभिः । अग्नेदक्षैःपुनीहिनः ॥२६॥

त्रिऽभिः । त्वम् । देव । सवितः । वर्षिष्ठैः । सोम । धामऽभिः ।
अग्ने । दक्षैः । पुनीहि । नः ॥ २६ ॥

हे देव स्तुत्य दीप्यमान वा हे सवितः सर्वस्य स्वस्वकर्मणि चोदयितः हे सोम पवमानगुणविशिष्ट हे अग्ने त्वं वर्षिष्ठैः वृद्धतमैः अतएव दक्षैः सामर्थ्यवद्भिस्त्रिभिर्धामभिः शरीरैरग्निवायुसूर्यात्मकैस्त्रिभिः शरीरैः नोस्मान्पुनीहि परिशुद्धान् कुरु ॥ २६ ॥

अथसप्तविंशी—

**पुनन्तुमांदेवजनाःपुनन्तुवसवोधिया ।**
**विश्वेदेवाःपुनीतमाजातवेदःपुनीहिमा ॥ २७ ॥**

**पुनन्तु । माम् । देवऽजनाः । पुनन्तु । वसवः । धिया । विश्वे ।**
**देवाः । पुनीत । मा । जातऽवेदः । पुनीहि । मा ॥ २७ ॥**

देवजनाः देवानां जनःप्रादुर्भावोयेषां यज्ञेष्विति देवजनायजमानाः । यद्वा इन्द्रादिदेवगणाः मां पुनन्तु परिपूतं कुर्वन्तु । तथा वसवः वासकादेवाः धिया आत्मीयेनकर्मणा मां पुनन्तु । अथवा प्रत्यक्षः हे विश्वदेवाः सर्वेदेवाः मा मां पुनीत पूतं कुरुत । हे जातवेदः जातानि वेत्तीति यद्वा जातप्रज्ञ अग्ने मा मां पुनीहि ॥ २७ ॥

अथाष्टाविंशी—

**प्रप्यायस्वप्रस्यन्दस्वसोमविश्वेभिरंशुभिः । देवेभ्यउत्तमंहविः ॥२८॥**

**प्र । प्यायस्व । प्र । स्यन्दस्व । सोम । विश्वेभिः । अंशुऽभिः ।**
**देवेभ्यः । उत्ऽतमम् । हविः ॥ २८ ॥**

हे सोम प्रप्यायस्व अस्मान् प्रकर्षेण वर्धय । यद्वा देवान् सोमेन वर्धय । किंच विश्वेभिरंशुभिः सर्वैस्त्वदीयैरंशुभिः देवेभ्योदेवार्थमुत्तमं प्रशस्ततमंहविः सोमरूपं प्रस्यंदस्व कलशादीन् प्रति प्रस्रव प्रयच्छेति यावत् ॥ २८ ॥

अग्नीषोमप्रणयने उपप्रियमित्येषा । सूत्रितंच—उपप्रियंपनिप्रतमित्यर्धर्चआरमेदिति ।

सैषा सूक्ते एकोनत्रिंशी—

**उपप्रियंपनिप्रतंयुवानमाहुतीवृधम् । अगन्मबिभ्रतोनमः ॥२९॥**

उप॑ । प्रि॒यम् । पनि॑प्नतम् । युवा॑नम् । आ॒हु॒ति॒ऽवृध॑म् ।
अग॑न्म । बिभ्र॑तः । नम॑ः ॥ २९ ॥

प्रियं सर्वस्य प्रीणयितारं पनिप्नतमत्यन्तं शब्दायमानं युवानं तरुणमाहुतीवृधं आहुतिभिर्वर्धनीयं पवमानं वयं नमोहविर्नमस्कारंवा बिभ्रतोधारयन्तःसन्तः उपागन्म उपगच्छेम । गमेर्लुङि मंत्रेघसेतिच्लेर्लुकि सति म्वोश्चेतिनकारः । पनिप्नतं पनेःस्तुत्यर्थस्य यङ्लुकिरूपं दाधर्तिदर्धर्तिइतिसूत्रे इतिकरणस्य प्रदर्शनार्थत्वादत्राभ्यासस्य निगागमउपधालोपश्च निपात्यते ॥ २९ ॥

अथ त्रिंशी–

अ॒ला॒य्य॑स्य प॒र॒शुर्न॑नाश॒ तमा प॑वस्व देव सोम । आ॒खुं चि॑दे॒व दे॑व सोम ॥ ३० ॥

अ॒ला॒य्य॑स्य । प॒र॒शुः । न॒ना॒श॒ । तम् । आ । प॒व॒स्व॒ । दे॒व॒ । सो॒म॒ । आ॒खुम् । चि॒त् । ए॒व । दे॒व॒ । सो॒म॒ ॥ ३० ॥

अलाय्यस्य अर्तेरौणादिकआय्यप्रत्ययः कपिलकादित्वाल्लत्वं अभिगमनशीलस्य शत्रोः परशुः छेदकः पवमानस्तमेवशत्रुं ननाश नाशयतु । अस्मानपापान् ततोहे देव दीप्यमान सोम आपवस्व अस्मदाभिमुख्येन गच्छ । किंच हे देव द्योतमान स्तुत्य वा हे सोम आखुंचित् खलु अवदारणे सर्वस्याहन्तारमपि तं शत्रुमेव बाधस्व अस्मानपापानिति ॥ ३० ॥

अथैकत्रिंशी–

यः पा॑वमा॒नीर॒ध्येत्यृषि॑भि॒ः संभृ॑तं॒ रस॑म् ।
सर्वं॒ स पू॒तम॑श्नाति स्वदि॒तं मा॑त॒रिश्व॑ना ॥ ३१ ॥

यः । पा॒व॒मा॒नीः । अ॒धि॒ऽएति॑ । ऋषि॑ऽभिः । सम्ऽभृ॑तम् । रस॑म् । सर्व॑म् । सः । पू॒तम् । अ॒श्ना॒ति॒ । स्व॒दि॒तम् । मा॒त॒रिश्व॑ना ॥ ३१ ॥

योजनः पावमानीः पवमानदेवताकाः सर्वाऋचः तद्रूपं ऋषिभिः सूक्तद्रष्टृभिर्मधुच्छन्दःप्रभृतिभिः संभृतं संपादितं रसं वेदरसभूतं सारं सूक्तसंघं अध्येति अधीते । सजनः सर्वभोज्यजातं पूतं परिशुद्धमेवाश्नाति परिपूतं पापरहितं अन्नं भक्षयति । कथमस्यपूतत्वं तत्राह–स्वस्या-

शनात्प्रागेव मातरिश्वना मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः सचवायुःपवित्रमेव । पवित्रेण वायुना स्वदितं स्वादूकृतं । परिपूतमेवान्नं पश्चात् सनरोश्नाति ॥ ३१ ॥

अथ द्वात्रिंशी—

पावमानीर्योअध्येत्यृषिभिःसंभृंतरसम् ।
तस्मैसरंस्वतीदुहेक्षीरंसर्पिर्मधूंदकम् ॥ ३२ ॥ १८ ॥

पावमानीः । यः । अधिऽएति । ऋषिऽभिः । सम्ऽभृंतम् । रसम् ।
तस्मै । सरंस्वती । दुहे । क्षीरम् । सर्पिः । मधुं । उदकम् ॥३२॥१८॥

योब्राह्मणः पावमानीः पवमानदेवताकाऋचः तदात्मकं ऋषिभिर्मधुच्छन्दआदिभिः सं-भृतंरसं वेदसारं सूक्तसंघं अध्येति अधीते । तस्मै पवमानाध्ययनं कुर्वते जनाय सरस्वतीसर्वत्रसरणवती वाग्देवता क्षीरं यज्ञसाधनभूतं पयः सर्पिस्तादृशं घृतं मधु मदकरमुदकं सोमं दुहे स्वयमेव दोग्धि एनं नरं यागादिपरं वेदशास्त्रविदं करोतीत्यर्थः । दुहप्रपूरणे कर्मकर्तरि नदुहस्नुनमांयकूचिणाविति यकः प्रतिषेधः । लोपस्तआत्मनेपदेष्विति तलोपः ॥ ३२ ॥

॥ इति सप्तमस्य द्वितीयेष्टादशोवर्गः ॥ १८ ॥

॥ इति नवमे मण्डले तृतीयोनुवाकः ॥ ३ ॥

चतुर्थेनुवाके अष्टादशसूक्तानि तत्र प्रदेवमितिदशर्चं प्रथमं सूक्तं भलंदनपुत्रस्य वत्सप्रेरार्षं पवमानसोमदेवताकं दशमी त्रिष्टुप् शिष्टाजगत्यः । तथाचानुक्रम्यते—प्रदेवंदशवत्सप्रिर्भालंदनः त्रिष्टुबन्तंहेति । गतोविनियोगः ।

तत्र प्रथमा—

प्रदेवमच्छामधुंमन्तइन्दवोसिष्यदन्तगावआनधेनवः ।
बर्हिषदोंवचनावंन्तऊधंभिःपरिस्रुतंमुस्रियानिर्णिजंधिरे ॥ १ ॥

प्र । देवम् । अच्छं । मधुंऽमन्तः । इन्दंवः । असिंस्यदन्त । गावंः ।
आ । न । धेनवंः । बर्हिऽसदंः । वचनाऽवंन्तः । ऊधंऽभिः ।
परिऽस्रुतम् । उस्रियाः । निःऽनिजंम् । धिरे ॥ १ ॥

मधुमन्तो मादकरससंयुक्ता इन्दवः सोमाः देवं द्योतमानं सोमात्मकमिंद्रं अच्छ प्रति प्रासिष्यदन्त प्रस्यन्दन्ते. ग्रहादिषु क्षरन्ति । स्यन्दतेर्लुङि चङि रूपं । तत्रदृष्टान्तः—गावआंनधेनवः पयस्विन्यः प्रीणयित्र्योगावोयथावत्संप्रतियांतिप्रस्रवन्ति तद्वत् । किंच बर्हिषदः बर्हिषि सीदन्तः वचनावन्तः हंभारवादिशब्दवन्तः उस्रियाः गोनामैतत् तादृश्योगावः ऊधभिः पयोधारकैः स्वैः स्वैरूधभिः ताभ्यः परिस्रुतं परितःस्रवणशीलं निर्णिजं शुद्धं पयोभूतं सोमरसं धिरे दधिरे इंद्रार्थं धारयन्ति ॥ १ ॥

अथ द्वितीया—

**सरोरुवदभिपूर्वाअचिक्रददुपारुहःश्रथयंत्स्वादतेहरिः ।**
**तिरःपवित्रंपरियन्नुरुज्रयोनिशर्याणिदधतेदेवआवरम् ॥२॥**

सः । रोरुवत् । अभि । पूर्वाः । अचिक्रदत् । उपऽआरुहः । श्रथयन् । स्वादते । हरिः । तिरः । पवित्रम् । परिऽयन् । उरु । ज्रयः । नि । शर्याणि । दधते । देवः । आ । वरम् ॥ २ ॥

रोरुवत् कलशादिकंप्रति अत्यन्तं शब्दंकुर्वन् ससोमः पूर्वामुख्याः स्तोतॄणां स्तुतीः अभ्यचिक्रदत् अभिमुखं अध्वनयत् स्तुतयः साधीयस्यइति प्रतिध्वनिमंगीकारमकार्षीदित्यर्थः । किंच हरिः हरितवर्णः उपारुहः रोहतेस्ताच्छीलिकःक्विप् । उपारोहणशीलाःउर्ध्वप्रादुर्भवनशीला ओषधीः श्रथयन् अग्रे विश्लेषयन् स्वादते स्वादूकरोति ताः फलिनीःकुर्वन् स्वादुयुक्ता विदधातीत्यर्थः । तथा पवित्रं अविवालात्मकं दशापवित्रं तिरस्तिरस्कृत्य पात्राणि प्रति आत्मनः क्षरणकाले पवित्रं व्यवधायकं कृत्वा परियन्परितोगच्छन् सोमः उरु महान्तं ज्रयोवेगं करोति । ततः सशर्याणि शॄहिंसायां हिंसितव्यानि यद्वा शरेण हंतव्यानि रक्षांसि निदधते निक्षिपति न्यक्करोति हिनस्तीतियावत् । पश्चाद्देवोदीप्यमानःसोमः वरं वरणीयं धनं सोमं दातृभ्योयजमानेभ्यः आदधते आधारयति प्रयच्छतीत्यर्थः । दधातेर्लेटयडागमे घोर्लोपोलेटिवेत्याकारलोपः ॥२॥

अथ तृतीया—

**वियोममेयम्यांसंयतीमदःसाकंवृधापयसापिन्वदक्षिता ।**
**महीअपारेरजसीविवेविदभिव्रजन्नक्षितंपाजआददे ॥ ३ ॥**

वि । यः । ममे । यम्यां । संयती इति सम्ऽयती । मदः । साकम्ऽवृधा । पयसा । पिन्वत् । अक्षिता । मही इति । अपारे इति । रजसी इति । विऽवेविदत् । अभिऽव्रजन् । अक्षितम् । पाजः । आ । ददे ॥ ३ ॥

योमदः माद्यत्यनेनेति मदः सोमरसः यम्या युगलभूते संयती परस्परंसंगच्छमाने द्यावापृथिव्यौ निममे विशेषेणनिर्मितवान् ततः ते साकंवृधा सहैववर्धनशीले तथा अक्षिता अक्षीणे सामर्थ्यवत्यौ यथा भविष्यतः तथा ससोमः पयसा पयोरूपेण स्वीयरसेन पिन्वदसिंचत् अवर्धयदितियावत् । किंच मही महत्यौ अतएव अपारे पर्यंतरहिते रजसी द्यावापृथिवीनामैतत् ते द्यावापृथिव्यौ विवेविदत् विदज्ञाने यङ्लुकि शतरि रूपं । अभ्यासस्वरः । इयंपृथिवी इयंद्यौरिति सर्वेषां विविच्य तेअसाप्रज्ञापयन् अभिव्रजन् अभितः सर्वातोगच्छन् सोमः अक्षितं अक्षीणं अविनश्वरं पाजोबलं आददे स्वीकृतवान् अत्यन्तंबलवानभवदित्यर्थः ॥ ३ ॥

अथ चतुर्थी—

समातराविचरन्वाजयन्नपःप्रमेधिरःस्वधयापिन्वतेपदम् ।
अंशुर्यवेनपिपिशेयतोनृभिःसंजामिभिर्नसतेरक्षतेशिरः ॥ ४ ॥

सः । मातरा । विऽचरन् । वाजयन् । अपः । प्र । मेधिरः । स्वधया । पिन्वते । पदम् । अंशुः । यवेन । पिपिशे । यतः । नृऽभिः । सम् । जामिऽभिः । नसते । रक्षते । शिरः ॥ ४ ॥

मेधिरः मेधारथाभ्यामिरन्निरचावितीरन्प्रत्ययोमत्वर्थीयः । मेधावान् प्राज्ञः ससोमः मातरा मातरौ जगतोनिर्मात्र्यौ द्याव्यापृथिव्यौ विचरन् अन्तरेणात्यन्तं चरन् । तथा अपः अन्तरिक्षस्थितान्युदकानि वाजयन् प्रेरयन् । वजेर्ण्यन्तस्य शतरि रूपं । तादृशः स्वधया सक्तुलक्षणेनान्नेन सह पदं स्वस्थानं उत्तरवेदिरूपं प्रपिन्वते प्रकर्षेणाप्याययति । ततः नृभिः कर्मनेतृभिः ऋत्विग्भिर्यतः संयतः अंशुः सोमः यवेन पिपिशे पिश अवयवे अवयवत्वेन कृतः मिश्रितइत्यर्थः । सोमस्तु यवसक्तुभिः श्रियतेखलु । सोयं जामिभिः एकस्मात्प्राणेरुत्पन्नाभिरंगुलीभिः सन्नसतेसंगच्छतेच । शिरः शीर्णं भूतजातं रक्षतेच स्वीयरसेन रक्षति पोषयति । नसतिर्गतिकर्मा चादिलोपेविभाषेति न निघातः ॥ ४ ॥

अथ पञ्चमी—

संदक्षेणमनसाजायतेकविर्ऋतस्यगर्भोनिहितोयमापरः ।
यूनांहसन्तांप्रथमंविजज्ञतुर्गुहाहितंजनिमनेममुद्यतम् ॥५॥१९॥

सम् । दक्षेण । मनसा । जायते । कविः । ऋतस्य । गर्भः । निऽहितः ।
यमा । परः । यूना । ह । सन्ता । प्रथमम् । वि । जज्ञतुः । गुहा ।
हितम् । जनिम । नेमम् । उत्ऽयतम् ॥ ५ ॥ १९ ॥

प्रसंगात्सोमसूर्ययोराविर्भावमाह । कविः दक्षेण प्रवृद्धेन मनसा सह संजायते पृथिव्याः सम्यक् जायते । तथा ऋतस्योदकस्येव गर्भो गर्भस्थानीयः । यद्वा सत्यस्य यज्ञस्य मध्ये गर्भः शब्दनीयः स्तुत्यः सएवसोमः परः परस्तादन्तरिक्षे यमोयमेन नियमेन देवैर्निहितः सः सूर्याद्धि वृष्टिर्भवति तस्मात्सोमः सूर्यात्मकतयावस्थितइत्यर्थः । एवं यूना । हेत्यवधारणे । युवानावेव सन्तौ तौ प्रथमं जननकाले विजज्ञतुः अयंसोमोऽयंसूर्यइति विशेषेण ज्ञायते । तयोश्चार्धं जनिम जन्म गुहा गुहायां हितं निहितं भवति । तयोर्नेममर्धंचोद्यतं प्रकाशितं भवति । दिवा सूर्यःप्रादुर्भवति रात्रौ चन्द्रमाइति ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये एकोनविंशोवर्गः ॥ १९ ॥

अथ षष्ठी—

मन्द्रस्यरूपंविविदुर्मनीषिणःश्येनोयदन्धोअभरत्परावतः ।
तंमर्जयन्तसुवृधंनदीष्वाँउशन्तमंशुंपरियन्तमृग्मियम् ॥ ६ ॥

मन्द्रस्य । रूपम् । विविदुः । मनीषिणः । श्येनः । यत् । अन्धः ।
अभरत् । पराऽवतः । तम् । मर्जयन्त । सुऽवृधम् । नदीषु । आ ।
उशन्तम् । अंशुम् । परिऽयन्तम् । ऋग्मियम् ॥ ६ ॥

मनीषिणः प्राज्ञा यष्टारः मंद्रस्य मदकरस्य रसस्य सोमस्य रूपं विविदुः जानन्ति यदन्धः यत्सोमलक्षणमन्नं श्येनो गायत्रीरूपः पक्षी परावतो दूरात् द्युलोकात् आभरदाजहार । हृग्रहोर्भश्छन्दसीति भकारः । तं तादृशं सुवृधं सुष्ठुवर्धमानं सुवर्धयितारंवा अंशुं सोमं नदीषु

नदमानासु वसतीवर्याख्यास्वप्सु आमर्जयन्त ऋत्विजः आशोधयन्ति अलंकुर्वन्तिवा । कीदृशं उशन्तं देवान् कामयमानं परियन्तं परितोगच्छन्तं ऋग्मियं ऋगर्हं स्तुत्यं सोममामर्जयन्तीति ॥ ६ ॥

अथ सप्तमी–

**त्वांमृंजन्तिदशयोषणःसुतंसोमऋषिभिर्मतिभिर्धीतिभिर्हितम् ।**
**अव्योवारेभिरुतदेवहूतिभिर्नृभिर्यतोवाजमादर्षिसातये ॥७॥**

त्वाम् । मृजन्ति । दश । योषणः । सुतम् । सोमं । ऋषिऽभिः ।
मतिऽभिः । धीतिऽभिः । हितम् । अव्यः । वारेभिः । उत । देवहूतिऽभिः ।
नृऽभिः । यतः । वाजम् । आ । दर्षि । सातये ॥ ७ ॥

हे सोम योषणः द्वाभ्यांपाणिभ्यां विभज्योत्पन्ना दश दशसंख्याकाअंगुलयः । ऋषिभिर्मधुच्छन्दःप्रभृतिभिः सुतमभिषुतं हितं पात्रेषु निहितं त्वा त्वां मतिभिः स्तुतिभिः धीतिभिः कर्मभिश्च अव्योवारेभिः अविवालैः पवित्रैः मृजन्ति शोधयन्ति । उतापिच देवहूतिभिः । देवाह्वानयुक्तैः नृभिः कर्मनेतृभिः ऋत्विग्भिः यतः गृहेषु संयमितः संगृहीतस्त्वं सातये दानाय वाजमन्नमादर्षि आविदारयसि विवृतंकरोषि स्तोतृभ्यः अन्नादिकं प्रयच्छसीतियावत् ॥ ७ ॥

अथाष्टमी–

**परिप्रयन्तंवय्यंसुषंसदंसोमंमनीषाअभ्यनूषतस्तुभः ।**
**योधारयामधुमाँऊर्मिणादिवइयर्तिवाचंरयिषाळमर्त्यः॥८॥**

परिऽप्रयन्तंम् । वय्यंम् । सुऽसंसदंम् । सोमंम् । मनीषाः । अभि ।
अनूषत । स्तुभंः । यः । धारया । मधुऽमान् । ऊर्मिणा । दिवः ।
इयर्ति । वाचंम् । रयिषाट् । अमर्त्यः ॥ ८ ॥

परिप्रयन्तं पात्राणिपरितः प्रगच्छन्तं वय्यं देवैः काम्यमानं सुषंसदं शोभनं संसदनं सोमं मनीषा मनसईशित्र्यः स्तुभः स्तुतयः अभ्यनूषत अभिष्टुवन्ति । वय्यं वीगत्यादिषु इत्यस्मात् वयंति भय्यप्रवय्येचछन्दसीति निपातितः अत्रानुपसर्गस्यापिनिपातनंभवति

मधुमान् मदकररसवान् यः सोमः धारया स्वीयया ऊर्मिणा वसतीवर्याख्येनोदकेन सह दिवआकाशात् द्रोणकलशे आपतति रयिषाट् शत्रुधनानामभिभविता अमर्त्यः मनुष्यधर्मरहितः ससोमः वाचमियर्ति प्रेरयति तदाहि स्तोतारः स्तुवन्तीति उच्यन्ते ॥ ८ ॥

अथ नवमी–

अयंदिवइयर्तिविश्वमारजःसोमःपुनानःकलशेषुसीदति ।
अद्भिर्गोभिर्मृज्यतेअद्रिभिःसुतःपुनानइन्दुर्वरिवोविदत्प्रियम् ॥ ९ ॥

अयम् । दिवः । इयर्ति । विश्वम् । आ । रजः । सोमः ।
पुनानः । कलशेषु । सीदति । अत्ऽभिः । गोभिः । मृज्यते ।
अद्रिऽभिः । सुतः । पुनानः । इन्दुः । वरिवः । विदत् । प्रियम् ॥ ९ ॥

अयंसोमो दिवोद्युलोकाद्विश्वं रजउदकनामैतत् सर्वमुदकमियर्ति अभिप्रापयति । किंच पुनानः दशापवित्रेण पूयमानः सोमः कलशेषु द्रोणनामसु सीदति । तथा अद्रिभिर्ग्रावभिः अद्भिर्वसतीवर्याख्याभिर्गोभिर्गोविकारैः क्षीरदध्यादिभिश्च मृज्यते शोध्यते अलंक्रियते । ततः सुतोभिषुतः पुनानः पूतइन्दुः सोमः प्रियं प्रियतरं प्रीणनकारिवा वरिवोवरणीयं धनं विदत् स्तोतृभ्योलंभयति प्रयच्छतीतियावत् ॥ ९ ॥

अथ दशमी–

एवानःसोमपरिषिच्यमानोवयोदधच्चित्रतमंपवस्व ।
अद्वेषेद्यावापृथिवीहुवेमदेवाधत्तरयिमस्मेसुवीरम् ॥ १० ॥२०॥

एव । नः । सोम । परिऽसिच्यमानः । वयः । दधत् । चित्रऽतमम् ।
पवस्व । अद्वेषे इति । द्यावापृथिवी इति । हुवेम । देवाः ।
धत्त । रयिम् । अस्मे इति । सुऽवीरम् ॥ १० ॥ २० ॥

अयं प्रत्यक्षकृतः हे सोम दधत् प्रयच्छंस्त्वं परिषिच्यमानः परितोद्भिर्गोभिर्वासिच्यमानः एव एवं चित्रतमं नानाविधं चायनीयतमं वा वयोन्नं नोस्मभ्यं पवस्व प्रापय प्रयच्छेति

यावत् । किंच अद्वेषे द्वेषरहिते द्यावापृथिवी द्यावापृथिव्यौ हुवेम हविःप्रदानार्थं वयमाह्वयेम । हेदेवाः यूयंच सुवीरं । वीरः कर्मणि समर्थः पुत्रः । तादृशपुत्रोपेतं रयिं धनमस्मे अस्मासु धत्त निधत्त ॥ १० ॥

॥ इति सप्तमस्य द्वितीये विंशोवर्गः ॥ २० ॥

इषुर्नेतिदशर्चं द्वितीयं सूक्तं आंगिरसस्य हिरण्यस्तूपस्यार्षं पवमानसोमदेवताकं । नवमी दशम्यौ त्रिष्टुभौ । शिष्टाजगत्यः । तथाचानुक्रान्तं—इषुर्नेहिरण्यस्तूपोंत्येत्रिष्टुभाविति । गतोविनियोगः ।

तत्र प्रथमा—

**इषुर्नधन्वन्प्रतिधीयतेमतिर्वत्सोनमातुरुपंसर्ज्यूधनि ।**
**उरुधारेवदुहेअग्रंआयत्यस्यव्रतेष्वपिसोमइष्यते ॥ १ ॥**

**इषुः । न । धन्वन् । प्रति । धीयते । मतिः । वत्सः । न । मातुः ।**
**उप । सर्जि । ऊधनि । उरुधाराऽइव । दुहे । अग्रे ।**
**आऽयती । अस्य । व्रतेषु । अपि । सोमः । इष्यते ॥ १ ॥**

अस्मिन्पवमानरूपे इन्द्रे मतिर्मननीयास्मदीयास्तुतिः प्रतिधीयते अस्माभिर्निधीयते वा । दधातेरूपं । तत्रदृष्टान्तः—इषुर्न यथा इषुः शरः धन्वन् धनुषि प्रतिधीयते तद्वत् । किंच ऊधनि सर्वस्य पोषयितृत्वेन ऊधःस्थानीये इन्द्रे सोमो मदार्थं अस्माभिरुपसर्जि उपसृज्यते । कथमिव मातुर्गोरूधनि पयोधारके वत्सोन वत्सोयथा पयःपानार्थं सृज्यते तद्वत् । उरुधारेव बहुविधपयोधारागौरिव । अग्रे वत्सस्य पुरतः आयती गच्छती सती पयोदुहे दुग्धे । तथा सोयमिन्द्रः वत्सभूतेभ्यः स्तोतृभ्यः पुरतोगच्छन् बहुविधान् कामान् दुग्धे । किंच अस्यैतादृशस्यव्रतेष्वपिच सोमइष्यते यष्टृभिः प्रेर्यते खलु ॥ १ ॥

अथ द्वितीया—

**उपोमतिःपृच्यतेसिच्यतेमधुमन्द्राजनीचोदतेअन्तरासनि ।**
**पवमानःसन्तनिःप्रघ्नतामिवमधुमान्द्रप्सःपरिवारमर्षति ॥ २ ॥**

उपो इति । मतिः । पृच्यते । सिच्यते । मधु । मन्द्रऽअजनी ।
चोदते । अन्तः । आसनि । पवमानः । सम्ऽतनिः । प्रघ्नताम्ऽइव ।
मधुऽमान् । द्रप्सः । परि । वारम् । अर्षति ॥ २ ॥

अस्मिन् पवमानरूपे स्तोत्रे इन्द्रे मतिः स्तुतिरुपोपृच्यते उपपृच्यते स्तोतृभिः संयोज्यते पृचीसंपर्के । तथा मधु मदकरः सोमः इन्द्रार्थं सिच्यते । अद्भिर्यवसक्तुभिश्च सिक्तोभवति । ततश्च मन्द्राजनी अजगतिक्षेपणयोरित्यस्य ल्युटि ङीपि रूपं । मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य आसनि आस्येन्तर्मध्ये चोदते यष्टृभिः प्रेर्यते । आस्यशब्दस्य पद्दन्नोमासित्यादिनाआसन्नित्यादेशः । किंच संतनिः गृहादिषु सम्यक्विस्तृतः मधुमान् । मदकररसवान् पवमानः पूयमानः सोमः द्रप्सः द्रुतगमनशीलः । यद्वा क्षिप्रं हननशीलःसन् वारं अविवालमयं पवित्रं परितः अर्षति आगच्छति । तत्रदृष्टान्तः—प्रघ्नतामिव प्रकर्षेणहंतॄणां योद्धॄणां संतनिः सम्यग्विसृष्टः शरो यथा शीघ्रंप्राप्यमभितोगच्छति तद्वत् ॥ २ ॥

अथ तृतीया—

अव्येवधूयुःपवतेपरित्वचिश्रथ्नीतेनप्तीरदितेर्ऋतंयते ।
हरिरक्रान्यजतःसंयतोमदोनृम्णाशिशानोमहिषोनशोभते ॥ ३ ॥

अव्ये । वधूऽयुः । पवते । परि । त्वचि । श्रथ्नीते । नप्तीः ।
अदितेः । ऋतम् । यते । हरिः । अक्रान् । यजतः । सम्ऽयतः ।
मदः । नृम्णा । शिशानः । महिषः । न । शोभते ॥ ३ ॥

वधूयुः वधूभूता वसतीवर्यएकधनासहिताआपः तद्वान् सोमः अव्ये अवेः स्वभूते त्वचि चर्मणि परिपवते परितोवर्तते पूतोभवतिवा किंच नप्तीः नप्त्रीः नप्तृशब्दश्चतुर्थापत्यवाची सोमस्य नप्त्रीः सोमोह्योषधीनामग्रेरेतोनिषिंचति । प्रजापतेरेतोदेवादेवानांरेतोवर्षंवर्षस्यरेतओषधयः इतिश्रुतेः । यद्वा नप्तृशब्दोपत्यवाची तस्यापत्यानि सोमः सुधामयैः स्वकिरणैरोषधीर्वर्धयति तस्मादपत्यभूताअदितेः पृथिवीनामैतत् अदीनायाः पृथिव्याउत्पन्नाओषधीः ऋतं सत्यरूपं यज्ञे

१-ऐ० आरण्यके. ।

यते गच्छति यजमानाय अश्नीते अग्रभागे फलिनीः कर्तुं विश्लेषयति । किंच हरिर्हरितवर्णः यजतः सर्वैर्यष्टव्यः अतएव संयतः ग्रहादिषु संगृहीतोमदः माद्यत्यनेनेतिमदः सोमः तादृशः अक्रानक्रामति पात्रेष्ववतिष्ठते यद्वा शत्रूनतिक्रामति क्रमेर्लुङि तिपि बहुलंछन्दसीति इडागमाभावात् वृद्धौकृतायां सिज्लोपेसति हल्ङ्याद्दिना तिपोलोपे मोनोधातोरिति नत्वेकृतेरूपं । अतएव सोमः नृम्णा स्वबलानि शिशानः तीक्ष्णीकुर्वन् अथवा शत्रुबलानि तनूकुर्वन् महिषोन महत्नामैतत् महान्निव सर्वत्रव्याप्तइव शोभते स्वतेजसा सर्वत्र दीप्यते । यद्वा नः संपत्यर्थे इदानीमेवंगुणयुक्तः महान् सोमः शोभतइति ॥ ३ ॥

अथ चतुर्थी–

उक्षामिमातिप्रतियन्तिधेनवोदेवस्यदेवीरुपयन्तिनिष्कृतम् ।
अत्यक्रमीदर्जुनंवारमव्ययमत्कंननिक्तंपरिसोमोअव्यत ॥ ४ ॥

उक्षा । मिमाति । प्रति । यन्ति । धेनवः । देवस्य । देवीः ।
उप । यन्ति । निःऽकृतम् । अति । अक्रमीत् । अर्जुनम् । वारम् ।
अव्ययम् । अत्कम् । न । निक्तम् । परि । सोमः । अव्यत ॥ ४ ॥

उक्षा रेतसःसेक्ता वृषभः पुरतोमिमाति शब्दायते माङ्माने शब्देच तं वृषभं धेनवोगावः प्रतियन्ति अनुगच्छन्ति तथा देवस्य द्योतमानस्य निःकृतं संस्कृतं स्थानं देवीः देव्यउपयन्ति उपगच्छन्ति । अनेनार्धेन सोमस्तुतिश्चाभिधीयते सोमःसन् द्रोणकलशाभिगमनकाले शब्दंकरोति तमनुधेनवः प्रीणयित्र्यः स्तुतयःपरियन्ति देवस्थानं स्तुतयोभिगच्छन्ति । तथा सोयंसोमः अर्जुनं श्वेतवर्णं अव्ययमविमयमविस्वभूतं वारं वाले पवित्रमत्यक्रमीत् अतिक्रामति अतिक्रम्य पात्राणिगच्छतीत्यर्थः । किंच सोमः अत्कंन आत्मीयं कवचमिव । निक्तमुज्ज्वलं श्रयणद्रव्यं पर्यव्यत परितः संवृणोति ॥ ४ ॥

अथ पंचमी–

अमृक्तेनरुशतावाससाहरिरमर्त्योनिर्णिजानःपरिव्यत ।
दिवस्पृष्ठंबर्हणानिर्णिजेकृतोपस्तरणंचम्वोर्नभस्मयम् ॥ ५ ॥ २१ ॥

अमृक्तेन । रुशता । वाससा । हरिः । अमर्त्यः । निःऽनिजानः ।
परि । व्यत । दिवः । पृष्ठम् । बर्हणा । निःऽनिजे । कृत ।
उपऽस्तरणम् । चम्वोः । नभस्मयम् ॥ ५ ॥ २१ ॥

अमर्त्यो मनुष्यधर्मरहितो हरिर्हरितवर्णः सोमः निर्णिजानः उदकेन शोध्यमानःसन् अमृक्तेन । मृजीशौचालंकारयोः । अनिर्णिक्तेनापि रुशता स्वतः शुक्लवर्णेन पयोरूपेण वाससा परिव्यत परित आच्छादयति । सोमेपरिपूते गव्येन पयसा मिश्रीकुर्वन्ति खलु । तदुच्यते ततः सोयंसोमः दिवोद्युलोकस्य पृष्ठं पृष्ठभागेतिष्ठन्तमादित्यं बर्हणा बर्हणाय पापानामुद्यमनकारिणे पापनाशिने निर्निजे निर्निजनाय परिपवनाय कृत द्युलोके अकार्षीत् । सहि स्वदीप्त्या सर्वंनिर्णेक्ति । कृत कृणोतेर्लुङि ह्रस्वादिति सिचोलोपः । तदेवाह चम्वोः द्यावापृथिवीनामैतत् चमन्ति भक्षयन्ति अत्रदेवामनुष्याइति तयोरुपस्तरणं आच्छादनशीलं नभस्मयमादित्यमयं आदित्यस्य स्वभूतं तेजश्च सर्वेषां निर्णेजनायाकार्षीत् ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये एकविंशोवर्गः ॥ २१ ॥

अथ षष्ठी—

सूर्यस्येवरश्मयोद्रावयित्नवोमत्सरासःप्रसुपःसाकमीरते ।
तन्तुंततंपरिसर्गासआशवोनेन्द्रादृतेपवतेधामकिंचन ॥ ६ ॥

सूर्यस्यऽइव । रश्मयः । द्रवयित्नवः । मत्सरासः । प्रऽसुपः ।
साकम् । ईरते । तन्तुम् । ततम् । परि । सर्गासः । आशवः ।
न । इन्द्रात् । ऋते । पवते । धाम । किम् । चन ॥ ६ ॥

सूर्यस्यरश्मयः सर्वस्यप्रेरकस्य सुवीर्यस्य वादित्यस्य रश्मयः सर्वतोव्यापकाः किरणाइव द्रावयित्नवः सर्वत्रद्रवणशीलाः मत्सरासोमदकराः प्रसुपः शत्रूणां प्रस्वापकाः हन्तार आशवोग्रहेषुचमसेषुच व्याप्ताः सर्गासः सृज्यमानाः सोमाः ततं विस्तृतं तन्तुं तन्तुभिः कृतं वस्त्रं साकंसह युगपत् परिईरते परितोगच्छन्ति तेसोमा इन्द्रादृते इन्द्रंवर्जयित्वान्यत्किंचन धाम देवशरीरं

लक्षीकृत्य नपवते नगच्छति । एकवचनं छान्दसं नगच्छन्ति किंतु इन्द्रस्यैव धाम प्रति गच्छन्ति । इन्द्रस्य धाम्नोयष्टव्यत्वंच—अयाळिन्द्रस्यप्रियाधामानीति । मंत्रवर्णादवगम्यते ॥ ६ ॥

अथ सप्तमी—

सिन्धोरिवप्रवणेनिम्नआशवोवृषच्युतामदासोगातुमाशत ।
शंनोनिवेशेद्विपदेचतुष्पदेस्मेवाजाःसोमतिष्ठन्तुकृष्टयः ॥ ७ ॥

सिन्धोःऽइव । प्रवणे । निम्ने । आशवः । वृषऽच्युताः । मदासः ।
गातुम् । आशत । शम् । नः । निऽवेशे । द्विऽपदे । चतुःऽपदे ।
अस्मे इति । वाजाः । सोम । तिष्ठन्तु । कृष्टयः ॥ ७ ॥

वृषच्युताः । वृषहिंसासंक्लेशनदानेष्वपि । वृषभिः सोमस्यदातृभिः ऋत्विग्भिश्च्युताः परिस्रुता मदासोमादकाः सोमाः स्तुतिभिः प्राप्तव्ये इन्द्रेगातुं गमनमाशत व्याप्नुवन्ति । तत्रदृष्टान्तः—सिन्धोरिव प्रवणे गच्छन्त्युदकानि यत्रेति तत्प्रवणं तस्मिन्निम्नेस्थले सिन्धोर्नद्याआशवोव्याप्ता आपोयथा गच्छन्ति तद्वत् । अथप्रत्यक्षः । हेसोम नोस्माकं निवेशे स्वगृहंप्रति प्रवेशने निर्गमने वा द्विपदे पुत्रादिकाय चतुष्पदे गवादिकाय पशवे शं सुखं कुरु । किंच हे सोम अस्मे अस्मासु वाजाअन्नानि कृष्टयः पुत्रादिकाः प्रजाश्च तिष्ठन्तु अन्नादिकं देहीत्यर्थः ॥७॥

अथाष्टमी—

आनःपवस्ववसुमद्धिरण्यवदश्वावद्गोमद्यवमत्सुवीर्यम् ।
यूयंहिसोमपितरोममस्थनदिवोमूर्धानःप्रस्थितावयस्कृतः ॥ ८ ॥

आ । नः । पवस्व । वसुऽमत् । हिरण्यऽवत् । अश्वऽवत् । गोऽमत् ।
यवऽमत् । सुऽवीर्यम् । यूयम् । हि । सोम । पितरः । मम । स्थन ।
दिवः । मूर्धानः । प्रऽस्थिताः । वयःऽकृतः ॥ ८ ॥

हे सोम वसुमत् वसुयुक्तं हिरण्यवत् कनकादिसहितं अश्ववत् गोमत् गवाश्वसहितं यवमत् यवोनामधान्यविशेषः धान्यविशिष्टं सुवीर्यं शोभनवीर्योपेतं धनं नोस्मभ्यमापवस्व आ-

१ तै० ब्रा० ३. ५. ७.।

प्रापय प्रयच्छेतियावत् । किंच हेसोम यतस्त्वं ममपितॄणामंगिसामपि पितासि ततोयूयमेव ममपितरःस्थन भवथ पितृबहुत्वमस्यसोमस्याभिधीयते । कीदृशाः दिवोद्युलोकस्यमूर्धानः मूर्धवदुच्छ्रिताः कर्मभिः स्वर्गादिकं अलभन्तेत्यर्थः । प्रस्थिताः सर्वदाकर्मकरणार्थंस्थिता वयस्कृतः हवीरूपस्यान्नस्य कर्तारः तादृशाममपितरः त्वं भवसि ॥ ८ ॥

अथ नवमी—

एतेसोमाःपवमानासइन्द्रंरथाइवप्रययुःसातिमच्छं ।
सुताःपवित्रमतियन्त्यव्यंहित्वीवव्रिंहरितोवृष्टिमच्छं ॥ ९ ॥

एते । सोमाः । पवमानासः । इन्द्रम् । रथाःऽइव । प्र । ययुः ।
सातिम् । अच्छं । सुताः । पवित्रम् । अति । यन्ति ।
अव्यम् । हित्वी । वव्रिम् । हरितः । वृष्टिम् । अच्छं ॥ ९ ॥

पवमानासः पवित्रेणपूयमाना एतेस्मदीयाःसोमाः सातिं षणसंभक्तौ कर्मणिक्तिन् सर्वैः संभजनीयमिन्द्रं अच्छ प्रययुः प्रकर्षेणगच्छन्ति । तत्रदृष्टान्तः—रथाइव इन्द्रस्यरथाः यथासातिं । षोन्तकर्मणि ऊतियूतीत्यादिनानिपातितः । सीयते म्रियते अस्मिन्निति सातिः संग्रामः तमच्छ तं प्रतिप्रगच्छन्ति तद्वत् । किंच सुताः ग्रावभिरभिषुताः सोमाः अव्यमविवालभवं पवित्रमतियन्ति अतीत्यगच्छन्ति । तेमी हरितः हरितवर्णाश्वाः । यद्वा हरितः ते आदित्यवाहनरूपाअश्वाः भूत्वा वव्रिं वृणोति शरीरमिति वव्रिर्जरा आदृगमहनेति किप्रत्ययः सर्वांगव्यापिनीं जरां हित्वी हित्वा तरुणाः सन्तः वृष्टिमच्छ वृष्टिंगमयितुं गच्छन्ति । हित्वी जहातेश्चक्त्वीति ह्यादेशः स्नात्व्यादयश्चेतिछन्दसि निपातितं ॥ ९ ॥

अथ दशमी—

इन्दविन्द्रायबृहतेपवस्वसुमृळीकोअनवद्योरिशादाः ।
भराचन्द्राणिगृणतेवसूनिदेवैर्द्यावापृथिवीप्रावतंनः ॥ १० ॥२२॥

इन्दो इति । इन्द्राय । बृहते । पवस्व । सुऽमृळीकः । अनवद्यः ।
रिशादाः । भर । चन्द्राणि । गृणते । वसूनि । देवैः ।
द्यावापृथिवी इति । प्र । अवतम् । नः ॥ १० ॥ २२ ॥

हे इन्दो सोम त्वं बृहते महते इन्द्राय तदर्थं पवस्व पात्रेषुक्षर इन्द्रंप्रत्यागच्छ वा । कीदृशः सुमृळीकः इन्द्रस्य सुष्ठुसुखयिता अतएव अनवद्यः गर्हारहितः रिशादा रिशतां बाधकानां असिता एतादृशस्त्वं इन्द्राय पवस्व । किंच गृणते स्तुवते मह्यं चंद्राणि आह्लादकानि वसूनि धनानि भर प्रयच्छ । किंच हे द्यावापृथिवी युवांच पवमानेन परिप्लुते सत्यौ देवैः सुभगैर्धनैः सह नोस्मान्प्रावतं प्ररक्षतम् ॥ १० ॥

॥ इति सप्तमस्य द्वितीये द्वाविंशोवर्गः ॥ २२ ॥

त्रिरस्माइति दशर्चं तृतीयं सूक्तं वैश्वामित्रस्यरेणोरार्षं दशमीत्रिष्टुप् शिष्टाजगत्यः पवमानःसोमोदेवता । त्रिरस्मैरेणुरित्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

**त्रिरस्मैसप्तधेनवोदुदुह्रेसत्यामाशिरंपूर्व्येव्योमनि ।**
**चत्वार्यन्याभुवनानिनिर्णिजेचारूणिचक्रेयदृतैरवर्धत ॥ १ ॥**

त्रिः । अस्मै । सप्त । धेनवः । दुदुह्रे । सत्याम् । आऽशिरम् । पूर्व्ये ।
विऽओमनि । चत्वारि । अन्या । भुवनानि । निःऽनिजे ।
चारूणि । चक्रे । यत् । ऋतैः । अवर्धत ॥ १ ॥

अस्मै पवमानाय पूर्व्ये पूर्वैःकृते व्योमनि विविधंओम अवनं गमनं देवानामत्रेति व्योम यज्ञः तस्मिन्स्थिताय यद्वा मत्ने व्योमन्यन्तरिक्षे वर्तमानाय त्रिःसप्त एकविंशतिसंख्याकाधेनवःप्रीणयित्र्योगावः सत्यां यथार्थभूतामाशिरमाश्रयणसाधनं क्षीरादि दुदुह्रे दुहन्ति । यद्वा-त्रिःसप्त—द्वादशमासाः पंचर्तवस्त्रयइमेलोकाअसावादित्यएकविंशइति । एतैः सर्वैःसह गोषु पयउत्पाद्यते तत् गावोदुहन्तइति । किंच अयं सोमः अन्या अन्यानि चत्वारिभुवनानि उदकानि वसतीवरीस्तिस्रश्चैकधनाइति तानि चतुःसंख्याकानि चारूणि कल्याणानि उदकानि निर्णिजे निर्णेजनाय परिशोधनाय परिपोषणाय वा चक्रे कदा करोति यद्यदा अयमृतैर्यज्ञैरवर्धत वर्धितवान् तदाकरोति ॥ १ ॥

---

१ ऐ० ब्रा० १. ३०.

अथ द्वितीया–

**सभिक्षमाणोअमृतस्यचारुणउभेद्यावाकाव्येनाविशश्रथे।**
**तेजिष्ठाअपोमंहनापरिव्यतयदीदेवस्यश्रवसासदोविदुः॥ २॥**

सः। भिक्षमाणः। अमृतस्य। चारुणः। उभे इति। द्यावा।
काव्येन। वि। शश्रथे। तेजिष्ठाः। अपः। मंहना। परि। व्यत।
यदि। देवस्य। श्रवसा। सदः। विदुः॥ २॥

सपवमानः चारुणः कल्याणस्यामृतस्य उदकस्य क्रियाग्रहणंकर्तव्यमिति कर्मणः संप्रादनसंज्ञा चतुर्थ्यर्थेबहुलमितिषष्ठी। चारूदकं भिक्षमाणः यष्टृभिर्याच्यमानःसन् उभे। द्यावादेशस्य द्वंद्वेविहितत्वादत्र उत्तरपदाभावे द्वंद्वः प्रतीयते। उभे द्यावापृथिव्यौ काव्येन कविकर्मणा विशश्रथे विवृतेकरोति। यज्ञेन निमित्तेन उदकेन संपूरयतीत्यर्थः। किंच तेजिष्ठाः अतिशयेनदीप्तानि अपउदकानि मंहना महत्त्वेन परिव्यत वर्णार्थे परितआच्छादयति। यदि यदा ऋत्विजः देवस्य द्योतमानस्य सोमस्य सदः स्थानं श्रवसा हविषा युक्ताःसन्तः विदुः यागार्थं जानन्ति लभन्ति तदा परित आवृणोतीति। विदज्ञाने सिजभ्यस्तेति झेर्जुसादेशः॥ २॥

अथ तृतीया–

**तेअस्यसन्तुकेतवोमृत्यवोदाभ्यासोजनुषीउभेअनु।**
**येभिर्नृम्णाचदेव्याचपुनतआदिद्राजानंमननाअगृभ्णत॥ ३॥**

ते। अस्य। सन्तु। केतवः। अमृत्यवः। अदाभ्यासः। जनुषी इति।
उभे इति। अनु। येभिः। नृम्णा। च। देव्या। च। पुनते।
आत्। इत्। राजानम्। मननाः। अगृभ्णत॥ ३॥

अस्यैतादृशस्य सोमस्य केतवः प्रज्ञापकाः सर्वैश्चायनीयाः अमृत्यवो मरणधर्मरहिताः अतएव अदाभ्यासः। दभेश्चेतिवक्तव्यमितिण्यत्। परैरहिंस्यास्ते तादृशा अस्यरश्मयः उभे जनुषी जन्मनी स्थावरजंगमात्मके द्वेअनुलक्षीकृत्य संतु रक्षन्तु। ओषधीनामयं सोमोरेतोनिषिंचति यज्ञे मनुष्याणां च धाराः स्रवन्ति खलु। सोयं येभिर्यैः केतुभिर्नृम्णा नृम्णानि ब-

लानि देव्या देवार्हाणि चान्नानि पुनते प्रेरयति । आदिदभिषवानन्तरमेव राजानं सोमं मनना: मननीयाः स्तुतयः अगृभ्णत परिगृह्णन्ति प्राप्नुवन्तीत्यर्थः। हृग्रहोरिति भकारः ॥ ३ ॥

अथ चतुर्थी—

समृज्यमानोदशभिःसुकर्मभिःप्रमध्यमासुमातृषुप्रमेसचा ।
व्रतानिपानोअमृतस्यचारुणउभेनृचक्षाअनुपश्यतेविशौ ॥ ४ ॥

सः । मृज्यमानः । दशऽभिः । सुकर्मऽभिः । प्र । मध्यमासु । मातृषु । प्रऽमे । सचा । व्रतानि । पानः । अमृतस्य । चारुणः । उभे इति । नृऽचक्षाः । अनु । पश्यते । विशौ ॥ ४ ॥

सपवमानः सुकर्मभिः शोभनकर्मयुक्ताभिर्दशभिर्दशसंख्याकाभिरंगुलिभिर्मृज्यमानः सः सचा अग्नौप्रास्ताहुतिरित्यादिक्रमेणापांसहायः प्रमे लोकान् प्रमातुं मध्यमासु अन्तरिक्षस्थितास्ववतिष्ठते । प्रमे प्रपूर्वान्मातेः क्विपि ङयि आतइति योगविभागादाकारलोपः । किंच नृचक्षाः नृणांद्रष्टा पवमानः चारुणः कल्याणस्यामृतस्योदकस्य वृष्ट्यर्थं व्रतानि यागादिकर्माणि पानोरक्षन् उभे विशौ मनुष्यान् देवांश्चांतरिक्षेण गच्छन् अनुपश्यते अनुपश्यति मनुष्यानभिमतदानेन देवान् हविःप्रदानेनेति ॥ ४ ॥

अथ पंचमी—

सममृजानइन्द्रियायधायसओभेअन्तारोदसीहर्षतेहितः ।
वृषाशुष्मेणबाधतेविदुर्मतीरादेदिशानःशर्यहेवशुरुधः ॥ ५॥२३॥

सः । मर्मृजानः । इन्द्रियाय । धायसे । आ । उभे इति । अन्तरिति । रोदसी इति । हर्षते । हितः । वृषा । शुष्मेण । बाधते । वि । दुःऽमतीः । आऽदेदिशानः । शर्यहाऽइव । शुरुधः ॥ ५ ॥ २३ ॥

मर्मृजानः पवित्रेणमृज्यमानः सपवमानः धायसे जगतोधारकाय इन्द्रियाय इन्द्रस्यपर्याप्ताय बलाय तदर्थं उभे रोदसी कालाध्वनोरिति द्वितीया उभयोर्द्यावापृथिव्योरन्तर्हितः मध्येवर्तमानःसन् आहर्षत । सर्वतोगच्छति । इन्द्रस्यहिसोमेन बलं भवति । वृषा कामानामुदकानां वा वर्षकः सोयं शुष्मेण शोषकेण बलेन दुर्मतीः दुष्टबुद्धीनसुरान् विबाधते विशेषेण पीड-

यति । किंकुर्वन् शुरुधः शुचा रुंधन्ति परानिति पृषोदरादिः दुःखकारिणोसुरानादेदिशानः पुनः पुनराह्वयन् हन्ति । तत्रदृष्टान्तः—शर्यहेव हननसाधनैरिषुभिः हन्ता वीरः प्रतिभटान् यथा हिनस्ति तद्वत् ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये त्रयोविंशोवर्गः ॥ २३ ॥

अथ षष्ठी—

**समातरानददृशानउस्रियोनानददेतिमरुतामिवस्वनः ।**
**जानन्नृतंप्रथमंयत्स्वर्णरंप्रशंस्तयेकमवृणीतसुक्रतुः ॥ ६ ॥**

सः । मातरा । न । ददृशानः । उस्रियः । नानदत् । एति । मरुताम्ऽइव । स्वनः । जानन् । ऋतम् । प्रथमम् । यत् । स्वःऽनरम् । प्रऽशंस्तये । कम् । अवृणीत । सुऽक्रतुः ॥ ६ ॥

सपवमानः मातरा मातरौ द्यावापृथिव्यौ ददृशानः पुनः पुनः पश्यन् ततोनानदत् भृशंशब्दं कुर्वन् एति सर्वत्रगच्छति । तत्रदृष्टातः—उस्रियोन उस्रियेति गोनाम तस्य स्वरूपतोवत्सः यथा मातरं गां पश्यन् शब्दंकरोति तद्वत् । किंच मरुतामिव यथा मरुतांगणः स्वनः पचाद्यजन्तः स्वनंकुर्वन् सर्वतोगच्छति तद्वत् । यदुदकं स्वर्णरं स्वरितिसर्वपर्यायः सर्वमनुष्यहितंभवति सर्वे हि मनुष्या उदकेसंगच्छन्ते तत्कार्यत्वात् तादृशं प्रथमं मुख्यं ऋतमुदकं जानन् विद्वान् सुक्रतुः शोभनकर्मा सुप्रज्ञोवा सपवमानः प्रशस्तये प्रशंसनाय आत्मस्तोत्रकरणाय कं मनुष्यमवृणीत समभजत नान्यमस्मद्व्यतिरिक्तमित्यर्थः ॥ ६ ॥

अथ सप्तमी—

**रुवतिभीमोवृषभस्तविष्ययाशृङ्गेशिशानोहरिणीविचक्षणः ।**
**आयोनिंसोमःसुकृतंनिषीदतिगव्ययीत्वग्भवतिनिर्णिगव्ययी ॥ ७ ॥**

रुवति । भीमः । वृषभः । तविष्यया । शृङ्गे इति । शिशानः । हरिणी इति । विऽचक्षणः । आ । योनिम् । सोमः । सुऽकृतम् । नि । सीदति । गव्ययी । त्वक् । भवति । निःऽनिक् । अव्ययी ॥ ७ ॥

भीमः शत्रूणांभयंकरः वृषभः कामानांउदकानां वा वर्षणः विचक्षणः सर्वस्यविदर्शनशीलः सपवमानः तविष्यया तुइतिवृध्यर्थः अस्मादचइरितीप्रत्ययः तस्मादिच्छायामर्थेक्यच् सर्वप्रातिपदिकेभ्यइति सुगागमः आत्मनोबलेच्छया हरिणी हरितवर्णे द्वे शृंगे शिशानः तीक्ष्णीकुर्वन् प्रतिद्रोणकलशंप्रति द्वाभ्यांधाराभ्यां स्थाल्याग्रयणं गृह्णाति। तदुच्यते ते धारारूपशृंगे तीक्ष्णीकुर्वन् रुवति शब्दायते। रुशब्दे बहुलंछन्दसीतिशः। ततः ससोमः सुकृतं सुष्ठु कृतं योनिं स्वस्थानं द्रोणकलशमानिषीदति समन्तात्तिष्ठति। सोमस्य निर्णिक् निर्नेक्त्री परिशोधयित्री गव्ययी गोमयी त्वक्भवति। आनडुहे हि चर्मणि सोमाभिषवः। एवमव्ययी अविमयी त्वक्च निर्नेक्त्रीभवति तद्धि दशापवित्रापेक्ष्यमभिहितं ॥ ७ ॥

अथाष्टमी—

शुचिःपुनानस्तन्वंमरेपसमव्येहरिर्न्यधाविष्टसानवि।
जुष्टोमित्रायवरुणायवायवेत्रिधातुमधुक्रियतेसुकर्मभिः ॥ ८ ॥

शुचिः। पुनानः। तन्वम्। अरेपसम्। अव्ये। हरिः। नि।
अधाविष्ट। सानवि। जुष्टः। मित्राय। वरुणाय। वायवे।
त्रिऽधातु। मधु। क्रियते। सुकर्मऽभिः ॥ ८ ॥

अरेपसं पापरहितं। यद्वा रिपिगतौ गतिरहितं पात्रेस्थितं इत्यर्थः तादृशं तन्वंआत्मीयं शरीरं पुनानः शोधयन् अतएव शुचिः पूतः दीप्यमानोवा हरिः हरितवर्णःसोमः सानवि सानुनि समुच्छ्रितः अव्ये अविवालकृते दशापवित्रे न्यधाविष्ट ऋत्विग्भिर्निधीयते। धूञ्कंपने स्यसिच्सीयुट्तासिष्विति कर्मणिलुङि चिण्वदिटियण् णित्वाद्वृद्धिः। ततः मित्राय वरुणाय वायवे एतेभ्योजुष्टः पर्याप्तः त्रिधातु त्रिसंधानः। वसतीवरीभिः दध्ना पयसा संस्पृष्टः सोमः त्रिधातु तादृशं मधु मदकरः सोमः सुकर्मभिः शोभनकर्मयुक्तैर्ऋत्विक्भिः क्रियते मित्रादिदेवार्थं प्रदीयते ॥ ८ ॥

अथ नवमी—

पवस्वसोमदेववीतयेवृषेन्द्रस्यहार्दिसोमधानमाविश।
पुरानोबाधाद्दुरितातिपारयक्षेत्रविद्धिदिशआहाविपृच्छते ॥ ९ ॥

पवस्व । सोम । देवऽवीतये । वृषा । इन्द्रस्य । हार्दि ।
सोमऽधानम् । आ । विश । पुरा । नः । बाधात् । दुःऽइता । अति ।
पारय । क्षेत्रऽवित् । हि । दिशः । आह । विऽपृच्छते ॥ ९ ॥

हे सोम वृषा कामानामुदकानांवा सेचकस्त्वं देववीतये देवानांपानाय पवस्व कलशादिषु क्षर । अथ हे सोम त्वमिन्द्रस्य हार्दि हृदयंगमं प्रियं सोमधानं सोमोनिधीयतेस्मिन्निति सोमधानं पात्रं तदाविश प्रविश । किंच नोस्माकं बाधात बाधनात पीडनात् पुरा पूर्वमेव दुरिता दुरितानि दुर्गमनानि रक्षांसि अतिपारय अतीत्य पारंगमय । अपिच क्षेत्रवित् मार्गज्ञः पुरुषः विपृच्छते विविधं पंथानं पृच्छते जनाय दिशोमार्गानाह हि ब्रूते खलु । द्विक्रान्तं यथा रक्षति तथा यज्ञमार्गवेत्ता त्वं अस्मभ्यं यज्ञपथं उक्त्वास्मान् पालयेति ॥ ९ ॥

अथ दशमी—

हितोनसप्तिरभिवाजमर्षेन्द्रस्येन्दोजठरमापवस्व ।
नावानसिन्धुमतिपर्षिविद्वाञ्छूरोनयुध्यन्नवनोनिदस्पः ॥१०॥२४॥

हितः । न । सप्तिः । अभि । वाजम् । अर्ष । इन्द्रस्य । इन्दो इति ।
जठरम् । आ । पवस्व । नावा । न । सिन्धुम् । अति । पर्षि ।
विद्वान् । शूरः । न । युध्यन् । अव । नः । निदः । स्परिति स्पः ॥१०॥२४॥

हेसोम ऋत्विग्भिः प्रेर्यमाणःसन् वाजं सोमनिधानं द्रोणकलशमभ्यर्ष अभिगच्छ । तत्रदृष्टान्तः—हितोन सप्तिः अश्वः हितः प्रेर्यमाणःसन् वाजं संग्राममभिलक्ष्य यथा याति तद्वत् । ततः हे इन्दो इन्द्रस्य जठरं जठरभूतं द्रोणकलशं वा आपवस्व आभिमुख्येन प्रविश । किंच विद्वान् सर्वंजानंस्त्वं अस्मानतिपर्षि दुरितानतीत्य पारय । तत्रदृष्टान्तः—नावान यथा नाविकाः सिंधुं नदीं नावा मनुष्यान् पारयन्ति तद्वत । किंच हेसोम त्वं शूरोन शूरोवीरइव युध्यन् शत्रून् संप्रहरन् निदोनिन्दकाच्छत्रोः नोस्मानवस्यः अवपारय बाधां विनाश्य पालय । यद्वा नोस्माकं निदोनिन्दकान् शत्रून् अवस्यः अवाङ्मुखं जहि । स्पृहिंसायां बहुलंछन्दसीति श्नाप्रत्ययस्य लुक् तिपि गुणे हल्ङ्यादिना तिलोपः ॥ १० ॥

॥ इति सप्तमस्य द्वितीये चतुर्विंशोवर्गः ॥ २४ ॥

